# मनोरमा

## मासिकसंस्कृतपत्रिका

सम्पादकः—श्रीअनन्तत्रिपाठिशर्मा

# म नो र मा

मासिक संस्कृत पत्रिका


| नवमो वर्षः | १८९३ शकाब्दम्<br>वैशाखज्यैष्ठमासौ<br>April and May, 1971 | प्रथमा द्वितीया च सञ्चिके |
|---|---|---|



सम्पादकः—

श्री अनन्तत्रिपाठिशर्मा M. A, P. O. L.

साहित्यशिरोमणिः, मीमांसाविद्याप्रवीणः

आयुर्वेदाचार्यः, आयुर्वेदचक्रवर्ती

राष्ट्रभाषारत्नः


वार्षिकमूल्यं रूप्यकषट्कम्

इदं संचिकामूल्यं रूप्यकमेकम्।

*Printed and Published by Sri A. T. Sarma nt his owu Sirowoni Press Berhampur 2 (Grissa)*

# सूचीपत्रम्

श्रीः

# मनोरमा

ललितैः पदविन्यासैः सरसैर्भावबन्धनैः ।
भावुकानामन्तरङ्गे प्रतिभातु मनोरमा ॥


| नवमो वर्षः | १८९३ शकाब्दम्<br>वैशाखज्येष्ठ मासौ<br>April and May, 1971 | प्रथमा द्वितीया च सञ्चिके |
|---|---|---|


## सुभाषितानि

सत्यं सन्ति कियन्ति सन्ति न सखे रत्नानि रत्नाकरे
संजातस्तु स वस्तुतः स्तुतिकथापात्रं परं कौस्तुभः ।
यो जातः स्मरकेलिलोलकमलासोल्लसदोःकन्दली-
लीलालिङ्गनभाजनं भगवतो वक्षःस्थले कौस्तुभः ।१।

लब्धव्या रसिकेन चन्दनलता सा चेन्न लब्धुं क्षमा
द्वीपे भीमभुजङ्गमावृततया किं तस्य हीनं ततः ?
सारङ्गोपलालनीयमनघं सौरभ्यमभ्येयुषी
मोघा दुर्विधिना कृता परिणतौ सा केवलं निन्द्यते ।२।

लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः
स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः ।
एषाऽपि स्वयमेव तुल्यरमणाभावाद्वराकी हता !
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता ।३।

मद्रुक्तिश्चेदन्तर्मदयति सुधीभूय विदुषः
किमस्या नाम स्यादलसपुरुषानादरभरैः ?
यथा यूनस्तद्वत् परमरमणीयाऽपि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ।४।

सत्यं सन्ति गृहे गृहे सुकृतिनो येषां वचश्चातुरी
स्वे हर्म्ये कुलकन्यकेव लभते ज्ञातैर्गुणैर्गौरवम ।
दुष्प्रापः स तु कोऽपि कोविदमणिर्यद्वाग्रसग्राहिणी
पण्यस्त्रीव कलाकलापकुशला चेतांसि हर्तुं क्षमा ।५।

—०—

# आत्म कथा

इदानीं 'मनोरमा' नवमे हायने पदमादधाति। उदरनिमित्तं बद्धकृतवेषोऽहं तामिमां यथासमयं सहृदयानां पुरत उपस्थापयितुं नापारयमिति विषीदामि।

संस्कृतपत्रिकायाः प्रकाशे उच्चावचा अन्तरायाः खलेकपोतन्यायेन युगपदवतरन्ति। अनुभविनं विना न कोऽपि तानवबोद्धुं प्रभवतीति विश्वसिमि। 'तद्धि जानन्ति तद्विदः।' अस्या विलम्बितप्रकाशे नार्थाभावः कारणमिति असकृदावेदितचरम्। स्वाधीना मुद्राशाला वर्तते। परन्तु अक्षरसंयोजकेषु द्वित्रा एवाक्षरसंयोजकाः सन्ति ये किल देवनागरीं लिपिं जानन्ति। सर्वे च ते संस्कृतभाषानभिज्ञाः। असकृत्कृतान्यपि संशोधनानि न तैर्यथातथं सन्निवेशितानि भवन्ति। संशोधने च समधिकं कालं नयन्ति ते। केवलं मनोरमायाः प्रकाशार्थमेकं मुद्रायन्त्रं नियन्त्रितमास्ते। प्रपत्राणां संशोधनमपि मयैव करणीयं भवति। न चाहं सततं सुलभो भवामि। चिकित्सकस्य न काऽपि स्वाधीना वेला वर्तते। संसत्सदस्यत्वेन मासषट्कं देहल्यामवस्थातव्यं भवति। तेन मुद्रणे कोऽपि विलम्बः पदमादधाति। प्रबन्धा अपि नैवोपलभ्यन्ते। उपलब्धानां च यथायथं किमपि संस्करणं करणीयमापद्यते। अतएव विलम्बोऽवश्यम्भावी सम्पद्यते। विशेषतोऽक्षरसंयोजकाः राजकुलस्य मतदातृनामतालिकामुद्रणे बद्धश्रद्धा स्तदितरं कर्म कर्तुं नोपालम्यन्त। मतदातृनामसंयोजनं हि सहजं चतुर्गुणधनदायि च। अतस्ते वेतनान्यवधीर्य रात्रिंदिवं तत्र कार्यं कुर्वाणा विपुलं वित्तं लभन्ते। अतोऽत्र अक्षरसंयोजकानां कोऽप्यभावः संजातः। अहमपि लोकसभानिर्वाचने प्रयतमान आसम्। फलेन मनोरमा बहुविलम्बिता शिथिला संजाता।

इदानीमहं मुक्तः । न पुनर्मम देहल्यामवस्थानमावश्यकं भवति । चिकित्साऽपि नियन्त्रिता समधिकं समयं मनोरमायाः कृते विनियोक्तुं प्रभवामि । अतोऽतीताः संचिका अवधीय मनोरमाया नवमं वर्षं प्रचलतो वर्षस्य वैशाखमासादारभ्य प्रकल्पयामि । इदानीं च मनोरमायाः वैशाखस्य ज्येष्ठमासस्य च सम्बन्धि संचिकाद्वयं सहृदयानां पुरत उपस्थापयामि । सेयं स्निग्धया दृशा प्रेक्षणीयेति सहृदयानभ्यर्थये ।

सम्पादकः ।

—०—

# उत्तररामचरितसमालोचना

(अनुवृत्ता)

निबन्धा—श्री अनन्तत्रिपाठिशर्मा

(ख) शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति ।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्याऽसि जगतो
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ।

८ । (क) कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके
मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम्

अभिज्ञानशाकुन्तलम्

(ख) अतिशयितसुरासुरप्रभावं
शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे
धृतधनुषं रघुनन्दनं स्मरामि ॥

(क) (१) शमप्रधानेषु तपोवनेषु गूढं हि दाहात्मकमस्ति तेजः
स्पर्शानुकूला अपि सूर्यकान्तास्ते ह्यन्यतेजोभिभावाद्वमन्ति

(२) ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते।
प्रायः स्वं महिमानं क्षोभाद्धि प्रतिपद्यते जन्तुः।

(ख) न तेजस्तेजस्वी प्रसृतमपरेषां विषहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः।
मयुखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति॥

१० (क) ददौ रसात्पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः
अर्द्धोपभुक्तेन बिसेन जायां सम्भावयामास रथाङ्गनामा

कुमारसम्भवम्

(ख) लीलोत्खातमृणालकाण्डकवलच्छेदेषु संपादिताः
पुष्पत्पुष्करवासितस्य पयशो गण्डूषसंक्रान्तयः।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन–
र्यत्स्नेहादनराल नालनलिनी पत्रातपत्रं धृतम्॥

उत्तररामचरितम्

११। (क) १ अणुदिणं परिहीअसि अङ्गेहिं। केवलं
लावण्णमई छाई ण तुमं परिमुञ्चदि। (अनुदिनं परिहीयसे
अङ्गैः। केवलं लावण्यमयी छाया न त्वां परिमुञ्चति।

शाकुन्तलम्

२। शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते।

शाकुन्तलम्

३। प्रियायाः साबाधं तदपि कमनीयं वपुरिदम्।

शाकुन्तलम्।

(ख) नवकुवलय स्निग्धैरङ्गैर्ददौ नयनोत्सवं
सततमपि ते स्वेच्छादृश्यो नवो नव एव यः।
विकलकरणः पाण्डुच्छायः शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशोः प्रियः।

उत्तररामचरितम्।

एवमादिषु उदाहरणेषु कालिदासपद्यानामविकला छाया उत्तररामचरितीयपद्येषु परिदृश्यते। भवभूतेः कवितायां कालिदासीय-पद्यमांशिकभावेन छाया तु बहुषु स्थलेषु परिदृश्यते। सेयं छाया सहृदयैः स्वयमेव संकलनीया।

बहवो विपश्चितः कालिदासो भवभूतिश्च समकालिकाविति विश्वसन्ति। अत्र समाजे प्रचलिताः काश्चन जनश्रुतय एव कारणम्। 'बिन्दुमात्रं विशिष्यते' इति उत्तररामचरितमादाय कोऽपि प्रवादः प्रचलितोऽस्ति। इयं हि वस्तुस्थितिः। भवभूतिर्हि 'उत्तररामचरितं' प्रणीय तदिदं सकृदवलोकनीयमिति स्वशिष्यद्वारा कालिदासस्य सन्निधिं प्राहिणोत्। शिष्यश्च पुस्तकहस्तो कालिदासस्य गृहं गत्वा कालिदास-मक्षक्रीडायां बद्धश्रद्धं ददर्श, गुरोश्चानुरोधं विज्ञापयामास। कालिदासश्च तथैवाक्षान् पातयन् भवभूतेः शिष्यं पुस्तकं वाचयितु-मुवाच। शिष्यश्च पुस्तकं वाचयितुं प्रावर्तत, कालिदासश्च अक्षैः क्रीडन्नेव शुश्राव। पुस्तकपाठावसरे कालिदासो न किमप्युवाच। केवलं "किमपि किमपि मन्दं मन्दमासत्तियोगा"दिति पद्यपाठसमये 'बिन्दुमात्रं विशिष्यते' इत्युवाच। पुस्तकपाठानन्तरं शिष्यः प्रत्यावर्त्य गुरवे कालिदासस्य चेष्टितं, निवेदयामास ततो भवभूतिः 'रात्रिरेवं व्यरंसीदित्यत्र अनुस्वारं विहाय 'रात्रिरेव व्यरंसीदिति पाठं बहुमन्यते स्मेति श्रूयते। केचन टीकाकारा अपि कालिदासेन 'बिन्दुमात्रं विशिष्यत' इत्युक्तमिति श्लोकस्य व्याख्यानावसरे लिखन्तो दृश्यन्ते।

एवमपि अपरा किम्वदन्ती 'उत्तरे रामचरिते भवभूतिर्विशि-ष्यते' इत्यभियुक्तोक्तिं विषयीकृत्य प्रवृत्ता। अत्र तु अपरः कोऽपि विशेषो दृश्यते। कालिदासस्य भवभूतेश्च मध्ये स्वस्वकवितायाः उत्कर्षं विषयीकृत्य कश्चन कलह उदपद्यत। कलहस्यास्य समाधा-नार्थं काचन विद्वत्परिषदाहूता। तत्र उत्तररामचरिते कालिदास

मापेक्षया भवभूतेरुत्कर्षो विपश्चिद्भिर्निर्धारित : तमिमनाशयम् "उत्तरे रामचरिते भवभूतिर्विशिष्यते' इत्यभि युक्तोक्तिव्य नक्ति । अस्मिन् विषये अपरोऽपि प्रचारो स्ति । स चाय प्रचारः स्वयं कालिदास एव विद्वत्परिषदि भवभूतिकाव्यानां स्वकाव्यानां च विस्तरतो विमर्शने जाते भवभूतिं प्रथमत आत्मन. समवक्षं स्वीकृत्य, परिशेषे उत्तररामचरिते भवभूतिमात्मनोऽप्यधिक स्वीचकरेति प्रतिभाति । सिद्धान्तावसरे कालिदासः "अहं वा भवभूतिर्वा, भवभूतिरथाप्यहम् । उत्तरे रामचरिते भ भूतिर्विशष्यते" इत्युक्त्वा भवभूतिं निजापेक्षया बहुमन्यते स्मेति प्रतिपादयन्ति ।

अपरोऽपि प्रवादो वर्तते । कदाचित्कालिदासभवभूती ल्बस्वकयिता वषये परस्परं विवदमानो निर्णयार्थं राज्ञः सभां गन्तुं प्रवृत्तो । मध्येमार्गं च सरस्वती भगवती कृतपण्डितवेषा 'सारगर्भाय कालिदासाय' नमः इति कालिदासाय, 'चकारकुक्षये भवभूतये नम' इति च भवभूतये न स्कार । अमर्षपूरितेन भवभूतिनां अनुरुद्धा पण्डित-वेषा सरस्वती विशेषण द्वयस्य सारगर्भतामुदाहरणैः प्रकटीचकार । तेन भवभूतिरात्मनः अभिमानं दूरेकृत्य कालिदासं बहु मन्तुं प्रावर्तत ।

परन्तु एतादृशेषु प्रवादेषु न किमपि स्वारस्यं वर्तते । एते सर्वेऽपि प्रवादा अर्थवादरूपा एव । स्तुतिनिन्दाफलकं वचनं हि अर्थवादः । कालिदासीयनाटकापेक्षया भवभूतिनाटकानां समधिक-मुत्कर्षं प्रतिपादयितुमेव प्रवृत्ता इति ब्रूमः । कालिदासीय रूपकाणां भविभूति रूपकाणां च काचन तुलना पुरस्तात्करिष्यते । अत्र तु: कालिदासभवभूती न कदापि समकालिकावास्तामित्येव ब्रूमः । कालिदासो हि विक्रमादित्यस्य सभायामवर्तत, भवभूतिश्च यशोवर्मण सभायामिति लोके प्रसिद्धिः । विक्रमादित्यश्च स्वतन्त्रः ख्रीस्तपूर्व प्रथमशताब्दीयो भवतु, अथवा गुप्तवंशीयद्वितीयचन्द्रगुप्तापरपर्यायः

ख्रीस्तीयचतुर्थशताब्दीयो भवतु, तस्य अष्टम शताब्दीयस्य यशवर्मणः समकालिकता कदाचित् कथंचिदपि न सम्भवतीति तदाश्रितयोः कालिदासभवभूत्योरपि समकालिकता कथं नाम सम्भवतु ? भवभूतिर्य शोवर्मणः समकालिकोऽष्टमशताब्दीय इत्यत्र नास्ति सन्देहस्यावसरः । कालिदासश्च सप्तमशताब्दीयेन बाणभट्टेन "निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु, प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते' इति प्रशंसितः । तथा षष्ठशताब्दीयेऽहोबलानुशासने "स जयति रविकीर्तिः कविताश्रितकालिदासभारविकीर्त्ति-रित्युल्लिखितो न कदाचिदष्टमशताब्दीयस्य भवभूतेः समकालिको भवितुमर्हति । अतः कालिदासभवभूती न समकालिकाविति निश्चिततया अवधारयन्तु सहृदयाः वाचकाः ।

समग्रेऽपि कालिदासस्य चरिते सोऽक्षक्रीडाव्यसनीति न कुत्राप्युल्लिखितमास्ते । स च महाकविना सबहुमानं प्रेषितं ग्रन्थरत्नमुत्तररामचरितमेतादृश्या अवज्ञयाऽवलोकयेदिति न वयं विश्वसितुं प्रभवामः । परन्तु 'बिन्दुमात्रं विशिष्यते' इत्युक्तिः केनापि सरसेन समालोचकेनाभिहितं भवेदिति ब्रूमः, यतो 'रात्रिरेवं व्यरंसीदिति पाठापेक्षया 'रात्रिरेव व्यरंसीदिति पाठः समीचीनतरः सहृदयहृदयसंवेद्यश्च विभाव्यते । भवभूतिरेव च तादृशं परिवर्तनं चकारेति स्वीकर्तुं न किमपि साधनमुपलभ्यते ।

इदानीम 'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इत्युक्तेस्तात्पर्यं याथार्थ्यं च निरूपणीये भवतः । इयं कालिदासस्योक्तिर्न भवतीति न कालिदासपरतया योजयितुं शक्यते । अस्या उक्तेः पूर्वार्द्धमपि किम्भूतं किमाकारं च संदृश्यते । 'अहं वा भवभूतिर्वा भवभूतिरथाप्यहम्' इत्यस्या उक्तेर्न पूर्वार्द्धं भवितुमर्हति । अत्राहंपदनिर्दिष्टा व्यक्तिः केति निरूपयितुं न शक्यते । कालिदासश्च न कदापि अहं पदनिर्देश्यो भवति । इतरस्या व्यक्तेरहंपदबोध्यत्वे

कालिदासापेक्षया भवभूतेरुत्तररामचरिते विशेष इत्यर्थः कथमपि नायाति इतरव्यक्तेरहपदबोध्यत्वे पूर्वापरसंगतं न कोऽप्यर्थः पद्यस्यापि स्फुरति । अतोऽयमंशः उत्तरे रामचरिते भवभूतिर्विशिष्यते इत्यस्य पूर्वार्द्धमिति स्वीकर्तुं न प्रभवामो वयम् । विशेषतः 'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इत्यस्य कोऽर्थं इति विचारणीयं भवति । अनेन पद्यार्द्धेन भवभूतेर्विशेषः प्रतिपाद्यते । स च विशेषो न व्यक्तिविषयकः, परन्तु उत्तररामचरितविषयकः, उत्तररामचरितं चैकं रूपकम् । विशेषपदं च सापेक्षम् । तेन इतररूपकापेक्षया भवभूतेरुत्तररामचरिते विशेष उपलभ्यते इत्यर्थः समीचीनः प्रतिभाति । भवभूतेश्च महावीरचरितम्, मालतीमाधवं च विहाय नान्यद्रूपकमुपलभ्यते । अतः महावीरचरितापेक्षया मालतीमाधवापेक्षया च भवभूतेर्विशेष उत्तररामचरित उपलभ्यत इति निर्गलितोऽर्थो भवति । अर्थात् महावीरचरिते मालतीमाधवे वा भवभूतेः प्रतिभाया न तादृशं प्रतिफलनं यथोत्तररामचरित इति स्पष्टं भवति । अतो महावीरचरितापेक्षया मालतीमाधवापेक्षया च उत्तररामचरिते समधिको भवभूतेर्विशेष इत्यर्थपरतया प्रवादस्य योजने स्वारस्यं कलयामः । संविधानवैचित्र्ये, वस्तूपस्थापने, चरित्रचित्रणे शब्दार्थयोः संनिवेशे रसचित्रणे च महावीरचरितमालतीमाधवापेक्षया उत्तररामचरिते परः प्रकर्ष इति सहृदयहृदयमेव प्रमाणम् । रूपकत्रयस्य सकृत्पाठेनैव सोऽयं विशेषः परिलक्षितो भवति । अतएव समालोचका अभिप्रयन्ति—

"भवभूतेश्च सर्वस्वमुत्तरं चरितं कवेः ।
तत्रापि च तृतीयोऽङ्को यत्र च्छाया प्रदर्शिता"

अतः प्रवादस्य एतदर्थकतया योजनं समीचीनं कलयामः ।

( सावशेषम् )

# शिक्षायतनेषु छात्रविशृङ्खलाव्याधेर्निदानं, तत्प्रतीकारश्च

लेखकः – डक्टर श्री कृष्णचन्द्र आचार्यः (उत्कल विश्वविद्यालयाध्यापकः)

न केवलमस्माकं भारतवर्षे देशान्तरेष्वपि शिक्षायतनेषु छात्रविशृङ्खला समधिकं प्रसरन्ती परिलक्ष्यते । हिंसावृत्तेराचरणं, गुरुजनानां वाचो लंघनं, सामाजिकनीति नियमान् प्रत्यनादर इत्येवं रूपेण छात्रविशृङ्खला स्वरूपं प्रकाशयन्ती परिदृश्यते । परन्तु पृथिव्याः सर्वेषां राष्ट्राणामेतादृश्याः स्थितेस्तुलनया अस्मिद्देशस्य स्थितेः किमपि वैचित्र्यं विद्यत इत्यनुमीयते । हन्त ! 'ते हि नो दिवसा गताः' खलु येषु विद्यार्थिनो गुरुकुलाश्रममागत्य गुरोराज्ञानुवर्तिनो विद्यामुपजगृहुः । आश्रमधेनूनां चारणरक्षणादिकार्येषु नियुक्ता भिक्षार्थं भटन्त द्वारात द्वारं छात्रा आश्रमं प्रतिनिवृत्ताः विद्याध्ययनं चक्रुः । तादृग् शिष्यपरम्परा अध्ययनविधिश्चाधुना स्वप्नवत् प्रतिभातः । गुरोर्दोषा-च्छादनात् छात्रः 'छात्रः' । इति परिज्ञातो बभूव प्राचीनभा[illegible] परन्त्वधुना गुरोर्दोषाणामाविष्करणेन, तत्प्रख्यापनेन, च तथाकथि[illegible] आत्मानं कृतकृत्यम्मन्यमानः विजयोल्लासेन वीरदर्पेण च सञ्चरतीत्यतः किमधिकं दुर्भाग्यकरं स्यात् !

सत्यम्, पाश्चात्यदेशेषु आत्मगौरवज्ञानं यथा छात्राणां हृदि अधिकतरं पदमधिकरोति तथैवास्माकं देशेऽपि । अत एवात्रापि छात्रा अध्ययनावसरेऽपि शासनदायित्ववहनस्य नितरामाग्रहिणः सन्तः शिक्षायतनकर्तृपक्षानुद्वेजयन्तीति लक्ष्यन्ते, परन्तु एतदपेक्षया किमपि उत्कटतरं कारणं विद्यते येन छात्रा धर्मं घटादीनाश्रित्य विक्षोभादिकं च प्रदर्श्य शिक्षायतनस्य शान्तिपूर्णवातावरणं न केवलं कलुषयन्ति, परन्तु बहुषु स्थलेषु साधारणजीवनयात्रामपि विपन्नां कुर्वन्ति ।

पश्चान्नरेण विश्वविद्यालयेषु प्रचलिता शिक्षाव्यवस्था प्रयोजननिरपेक्षा विद्यते। समाजस्य परिवर्त्तित परिस्थितिं प्रति प्रतिकूला सती वास्तवजीवनस्यार्थसाधने सा नितरामसमर्था भवति। परीक्षापद्धतिश्च ईदृशो वर्त्तते। पाठ्यनिर्घण्टबहिर्भूत विषयेषु प्रश्नाः बहुशरमागच्छन्तीति परीक्षार्थिनामभियोगः। ईदृशी च दशा कदाचित् छात्रानुद्वेजयति धर्मघटादिना शान्ति विघटयतीति बहुशो दृश्यते। प्राचीनभारते ईदृशी परीक्षाव्यवस्था नासीत्। यावदध्ययनान्तं छात्रा गुरुगृहमधिवसन्तः शिक्षां समाप्य स्नातकत्वमधिगताः स्वगृहं प्रत्यावर्त्तन्ते स्म। परन्तु साम्प्रतं श्रेण्यामुपस्थानमनिर्वार्यं सत् गुरून् छात्रांश्च अवश्य कर्त्तव्यतया श्रेण्युपस्थाने नियोजयति। शिक्षादानाय कदाचिदिच्छाऽसत्त्वेऽपि शिक्षकः श्रेण्यां प्रविशति। शिक्षाग्रहणाय स्वेच्छाऽभावेऽपि छात्रः श्रेण्यामुपस्थितो भवति। एवं सति न शिक्षकस्य नापि छात्रस्य अध्यापनार्थमध्ययनार्थं च वासना समुदेति। कति वा तावन्निष्ठापरा गुरवश्छात्राश्च सन्ति येषां हृदये यथार्थतो विद्यामीप्सा जागर्त्ति? परीक्षाकालः यदा नेदीयान् भवति, वर्षमभिव्याप्य पुस्तकमस्पृष्ट्वा कालं यापयन्तस्तथाकथिता विद्यार्थिनः, सरलटीकासमन्वितपुस्तिकाध्ययनेन मूलपुस्तकमनधिगत्यापि परीक्षामहोदधिं यथाकथञ्चित् समुत्तीर्णा भवन्ति। ईदृशी व्यवस्था शिक्षाया मानमधस्तान्नयतीति नात्र कश्चित् सन्देहावकाशः। कर्मक्षेत्रेषु च प्रमाणपत्रस्य यादृशी आवश्यकता विद्यते न तादृशी ज्ञानगरिम्णः। एवं च प्रमाणपत्रमेवा द्रियमाणे समाजे लब्धावकाशं छात्राणां परीक्षोत्तरणसाफल्यमेव प्रमाणं नान्यदिति।

प्रतारणाप्रवृत्तिश्च समाजेऽधिकतरं दृष्टिपथमायाति। परीक्षायामवैधोपायावलम्बने युवानः आग्रहशीला भवन्ति, तत्र च साफल्यं लभन्ते। मूलादेव शठता प्रकाशनमेवं रीत्या समाजे वर्द्धमानं परिदृश्यते। नूनमेव तत्फलं समाजस्यापकारसाधनम्। येषां तावत्

जीवनेऽनुभूतिवाहुल्यं विद्यते, ते स्थविरा अपि युवगोष्ठीं प्रति मार्ग-प्रदर्शने अपारगा संवृत्ताः । ते सर्वदैव तेषामनुस्मरन्तस्तत्काल-प्रतिकारकरणे विमुखाः युवमानसप्रकृतिं बोद्धुमसमर्थाश्च भवन्ति । परस्परं सौहार्दस्थापनं दूरं आस्ताम्, आस्थापोषणमपि न खलु संभवति, एवं च परस्परमसहमानाः अविश्वासोपहतास्ते स्थविराः युवसु किमपि जागरणं प्रेरणां वा जनयितुं न शक्नुवन्ति ।

शिशोश्चरित्रगठने पितरावेव परमसहायकौ स्तः । स्वनि-केतनमेव शिशोः कृते वलिष्ठं शिक्षाकेन्द्रमास्ते । वाल्यादारभ्य यां कांचित् शिक्षां लभते शिशुस्तामेव उत्तरजीवने सफलीकरोति । परन्त्वधुनातन समाजे गृहाणि शिक्षाप्रदानाय अनुपयुक्तानि प्रतीयन्ते । ये तावदभिभावकाः पित्रादयस्ते शिशोश्चरित्रनियमने व्यक्तित्वगठने च समधिकध्यानं न प्रददति । न्यायोचितकर्ममार्गस्यानुसरणमेवं वाल्यत एव मोघीभवति । दूरीभवत्येव दायित्वबोधः युवहृदयात् यस्य निदानं विशृङ्खलितं वाल्यजीवनमेव प्रतीयते ।

युवसेवामूलकान्यनुष्ठानानि स्थाने स्थाने प्रतिष्ठाप्यन्ते चेत् तन्माध्यमेन वहूनि लोकहितकराणि कर्माणि भवेयुः । निरक्षराय शिक्षादानं, राजपथवन्धादिनिर्माणं, कूपजलाशयादि खननं च एषु कर्मस्वन्तर्भुक्तानि । एतानि कार्य्याणि अवश्यमेव युवहृदये शृङ्खला-ज्ञानं, जातीयचेतनां च जनयितुं प्रभवन्ति । एतानि च पुनः कर्म संस्थासृष्टौ सहायकानि । क्रमेण एतानि च पुनः कर्मसंस्थासृष्टौ सहायकानि । क्रमेण एतादृशी कर्मसूची शिक्षायतनेषु पाठ्यक्रमेषु अवश्यं संयोजयितव्या ।

राजनीतौ नेतृवर्गाणा विद्यामन्दिरेषु यादृशः प्रभावः पतति, स च सर्वथा निन्दनीयः । छात्राः राजनीतावंशग्रहणं कुर्युर्न वा एतस्मिन् विषये विसम्वादो वर्त्तते । परन्तु एतदपि सर्वैरङ्गीकर्त्तव्यं यत् नेतृवर्गैः वहुशः छात्रसमाजं क्रीडनकं कृत्वा तेनैव स्वविजयं

साधयन्ति । परन्तु छात्राः तादृश जन नामङ्गुलि निर्देशेनाऽधीभूताः स्वकर्त्तव्य विस्मरन्ति । भविष्यन्निर्धारणे च विमुखा भवन्ति । राजनैतिक वातावरणस्य एवं विधकुप्रभावात् शिक्षायतनानि सर्वथा विमुक्तानि भवेयुः ।

विश्वविद्यालयस्य प्रशासनिकक्रियासु छात्राः कर्त्तृपक्षैः समभागिनो भवन्त्विति बहुश्छात्रेभ्य उद्घोषणा श्रूयते । छात्रप्रतिनिधयः विश्वविद्यालयस्य शिक्षायोजनासु शासनेषु चांशग्रहणं कुर्वन्त्विति विषये न मतद्वैधं वर्त्तते । परन्तु शिक्षाक्रमः अस्मिन् देशे त्रुटि संयुक्तः ।

शिक्षासंस्कारश्च यत्र बहुनायासेन कर्त्तव्यः, तत्र विश्वविद्यालय कर्मसु छात्रप्रतिनिधीनां योगदानमतीवावश्यकमिति न प्रतिभाति । सर्वादौ शिक्षायतनेषु सुस्थवातावरण सृष्टिर्विधेया, शिक्षा च यादृशी फलप्रदा भवेत्, कर्माभिमता सती युवसु नैराश्यदौर्मनस्यमपसारयेत्, तेषां च स्थितिं समाजे समधिकं परिगणयेत्, तादृश्येव विधेया। एतदर्थं केवलं पुस्तकानुसारिणी परीक्षानुकूला च शिक्षा अनर्थ-विधायिनीति प्रतीयते । वास्तवतामभिलक्ष्य कर्मयोजनासहायभूता शिक्षा सर्वथैव प्रवर्त्तनीयेति वस्तुस्थितिः ।



# गान्धिशतवार्षिकी

=प्रथम दृश्यम्=

(ग्रामपथम् उद्घोषणवाद्यहस्तः एकः पुरुषः कर्मचारिणा सह। केचन जनाः तेनैव पथा गमनागमनं कुर्वन्ति। वाद्यवाहिना उद्घोषणवाद्यं दीयते। कर्मचारी उदोघषणपत्र हस्तः दीयमानां वार्त्तां पठन्नास्ते)

कर्मचारी - भो भो शृणुत शृणुत। जातिजनकस्य महात्मनः गान्धेः जन्मशतवार्षिक पालनार्थमेका सभा ग्रामात् वहिः देवमन्दिरस्य प्रान्तरे अनुष्ठिता भविता। प्रदेशस्यास्य विद्वांसः देशसेवकाः श्रेष्ठाः नेतारः तत्र समुपस्थास्यन्ते। अतः सर्वं तत्रोपस्थाय नेतृणां भाषणादिकं सगृह्य यथा निर्दिष्टेषु कार्य्येषु अग्रेसराः भवन्तु। इयं सभा अद्यापराह्णे घटिकाचतुष्टये विश्वविद्यालयस्य कुलपतीनां सभापतित्वेन अनुष्ठास्यते। सर्वेषां सदयमुपस्थितिः प्रार्थनीयेति। (पठित्वा-निष्क्रान्तः)

(घोषणा पठनकाले द्वौ ग्रामवासिनौ तत्र समुपस्थितावास्ताम् तौ परस्परं मन्त्रयतः।)

प्रथमः– किं कथितमनेन ? अद्य सभा भविष्यतीति ?

द्वितीयः–गान्धिशतवार्षिकी सभा ग्रामात् बहिः देवमन्दिरस्य प्रान्तरे भविष्यति।

प्रथमः—इतः प्राक् मया श्रुता, नदीतीरे एका सभाऽनुष्ठिता, यत्र ग्रामेऽस्मिन् उच्चविद्यालयस्य स्थापना प्रस्ताविता, तदर्थं च यथाशक्तिदानं ग्रामवासिभिरङ्गीकृतमिति।

द्वितीयः—सत्यम् : तया सह अस्याः सम्बन्धः नास्ति।

प्रथमः—कथम् ? तत्र किं कुलपतिः विश्वविद्यालयस्य सभापतिर्नासीत् ?

द्वितीयः—अस्तु नाम । ग्रामव्यपारचर्च्चा । तत्र जाता, अत्र तु देशस्य.. ..

प्रथमः-शृणु भ्रातः ! गान्धिशतवार्षिक्यां गान्धिविचारधारा, तया सह अस्माकं ग्रामस्य, प्रदेशस्य देशस्य च सम्बन्धः अवश्यं विचारणीयः । ग्रामचर्च्चा विहाय देशचर्च्चा कुत्रास्ते ? जलविन्दुं विहाय सरितः, सागरस्य, महासागरस्य च चर्च्चा विडम्बनैव।

द्वितीयः—सागरचर्च्चावसरेऽपि जलसरिदादीनां चर्च्चा क्रियते तथैव गान्धिविचारधाराऽऽलोचनावसरे सर्वाऽपि विचारधारा नान्तर्लीयते किमु ?

प्रथमः—भवितुमर्हति । ग्रामीणाः वयम् । ग्रामपरिसरेऽस्माकं वृद्धिः प्रचलति । ग्रामस्य विभवः सौन्दर्य्यञ्च अनुदिनं क्षीयते, अतिवृष्ट्या, अनावृष्ट्या, वात्यया, वन्यया वा । ग्रामवासिनः अनेके ग्रामं परित्यज्य नगरं राज्यान्तरं वा आश्रयन्ति । अपरे तु अनाहारेण अर्धाहारेण वा महता कष्टेन कालमतिवाहयन्ति । ग्रामबहुलोऽयमस्माकं देशः । ग्रामस्य विकाशे देशस्य विकाशः, तेनैव देशेऽस्मिन् रामराज्यस्य सम्भव इति आसीत् विचारधारा महात्मनः मन्ये ?

द्वितीयः—अथ किम् ? नास्त्यत्र सन्देहस्यावसरः । तदर्थञ्च देशस्यास्य स्वाधीनः सर्कारः सकलां व्यवस्थां कर्त्तुमुत्सहते ।

प्रथमः—नहि, नहि, नहि भ्रातः ! व्यवस्था व्यवस्थेव प्रतिभाति, यथा ग्रामस्यावस्थाऽनुदिनमेवं याति ।

द्वितीयः—तर्हि सभास्थलमागच्छ । सर्वमपि विचारजातं तत्रैव प्रकाशय ।

प्रथमः—अस्माकं परामर्शं तत्र को वा श्रोष्यति ग्रहीष्यति वा ?

"अप्रियस्यापि पथ्यस्य वक्ता श्रोता च दुर्ल्लभः"

द्वितीयः—तथापि समास्थलं यथावसरं यास्यावः। आवश्यकतानुसारं यथा सामर्थ्यञ्च निवेदयिष्यावः।

प्रथम —भवतु, आह्निकादिकं समाप्य गन्तुं सज्जीभूतो भवामि।

द्वितीयः—अहमपि तथा करिष्ये।

(इति निष्क्रान्तौ)

इति प्रथम दृश्यम्

—द्वितीय दृश्यम्—

(ग्रामस्य पुस्तकागारम्। विद्युदालोकेनालोकितम्, परिष्कृतं सुसज्जितञ्च। उपवेशनार्थं पत्रिकादीनां संस्थापनार्थञ्च काष्ठासनादयः आवश्यकतानुसारमासन्। कःश्चन पत्रिकाश्च तदुपरि शोभन्ते। तत्रैकदेशे आलापरते उर्मिला प्रमीला च)

उर्मिला—पुस्तकागारात् पुस्तकं गृहीत्वा पठावः?

प्रमीला—अद्य पुस्तक पठनं तिष्ठतु। उपविश..........प्रथमतः मम प्रश्नस्य उत्तरं प्रयच्छ।

उर्मिला—(उपहसन्ती) दण्डायमाना तिष्ठामि। उपवेशनं न रोचते। किं कथयसि .......कथय।

प्रमीला—(गम्भीरा) परिहासस्य का कथा? ................सदुत्तर-दानेन सन्तोषय। स्नातकोत्तरोपाधिधारिण्यौ आवां किं करिष्यावः?

उर्मिला—(परिहासेन) असहयोगम्, अवरोधम्, आत्महत्यां वा.....

प्रमीला—(सकम्पा) एतदतिरिक्तं कर्म नास्ति किमु?

उर्मिला—(हसन्ती) वर्त्तते चेत् कथय।

प्रमिला—(विचार्य) यत्र कुत्रापि अध्यापिका ..... स एव महाविद्यालयः सर्वकारीयः असर्वकारीयो वा भवतु।

उर्मिला—प्रथमश्रेणी लब्धवत्य: क्व यास्यन्ति ?

प्रमीला—सत्यम्। कियत्कालं यावत् उच्चविद्यालये .....

उर्मिला—प्रशिक्षिता: कुत्र तिष्ठेयु: ?

प्रमीला—(उत्क्षिप्ता) सर्वकारीय कार्य्यालयेषु कर्मान्तर न विद्यते ?

उर्मिला—(परिहासेन) सीमितं वर्त्तते। योग्यताधायिका परीक्षाऽपि ....

प्रमिला—तर्हि ?

उर्मिला—गृहस्थाश्रम: श्रेयान्।

(उमेशमाधवौ तत्र प्रविशत:)

उमेश:—(सपरिहासम्) किं कथयसि उर्मिले ! गृहिणी भविष्यसि ? प्रस्तावितस्य उच्चविद्यालयगृहस्यावस्था.... ?

उर्मिला—(लज्जिता उत्तरं दातुमपेक्षते)

प्रमीला—(तां वारयन्ती) ग्रामेऽस्मिन् उच्चविद्यालयस्य स्थापनं मा भवतु।

माधव:—(सवितर्कम्) गान्धिशतवार्षिकी इमामुन्मादनां दत्तवती किमु ?

उर्मिला—न तथा, अपि तु प्रचलिता शिक्षापद्धति: तदर्थञ्च संस्थापिता: संस्थाप्यमानाश्च ये ये विद्यालया:, उच्चविद्यालया:, महाविद्यालयादयश्च वर्त्तन्ते ते देशस्या-वश्यकतानुसारं कार्य्यं सम्यक् नैव निर्वाहयन्ति।

उमेश:—(सपरिहासम्) मसीजीविन: ते नैव समुत्पादयन्ति ?

प्रमीला—(क्रोधं गोपयन्ती) समुत्तीर्णा:, अध्येतार: पिपठिषवश्च सर्वे शतसहस्र परिमिता: देशस्य मसीजीविनो भविष्यन्ति ?

उर्मिला—ते स्थितास्तु सर्वकारीय कार्य्यालयेभ्य: समधिका इति निष्कास्यन्ते।

माधवः—व्यावसायिकीं शिक्षामधिगताः अपि कर्मसंस्थानशून्याः न भवन्ति किम् ?

उर्मिला–भवन्ति, अपितु ते न तथा शिक्षामगृह्णन् यथा स्ववृत्तिं निर्वाहयिष्यन्ति । पश्यन्तु भवान्, वैद्यक शास्त्रनिष्णाताः केचन गृहे कर्मशून्याः तिष्ठन्ति वृत्त्यर्थं वा सर्वकारमपेक्षन्ते ।

उमेशः—शिक्षा वृत्तिमूलिका भवेदिति विचारधारा महात्मना गान्धिना बहुकालात् स्थिरीकृता ।

प्रमीला–स एव विचारः "गान्धिविचार इति" पुस्तकेषु शोभते । तदनुयायिनोऽपि तं विस्मृतिपथं प्रापितवन्तः ।

उर्मिला–नैतावता .... कृषिमहाविद्यालयेभ्यः लब्धोपाधिका विद्वांसोऽपि कृषिक्षेत्रे नैव पदं निदधति ।

माधवः–(क्षणं विचिन्त्य) देशेऽस्मिन् प्रचलिता शिक्षापद्धतिः सर्वतोभावेन निष्फला जाता, यया देशः निर्जीव इव प्रतिभाति ।

उमेशः–संसदि सत्यमेतदुद्घाटितमस्माकं ग्रामवासिना निरक्षरेण दामोदरेण ?

प्रमीला–निरक्षरोऽप्यभिज्ञोऽसौ ।

माधवः–तर्हि तिष्ठत्विदानीं ग्रामेऽस्मिन् उच्चविद्यालयस्थापनप्रयासः ?

उर्मिला – नहि...नहि.....उच्चविद्यालयस्थापनप्रयासस्य पथरोधः मा भवतु । संपद्यमाने उच्चविद्यालयेऽस्मिन् ग्रामस्यास्य सफलाः कृषिजीविनः, सुनिपुणाः तन्तुवायाः, कर्मकुशलाः मृत्च्छिल्पिनः, प्रशंसार्हाः लौहकाराः अपि सम्भविष्यन्ति । परिवर्त्तिनि संसारे नः ग्राम्यविश्वविद्यालयसंस्थापनमसमीचीनं न स्यात् ।

उपेशः—(साग्रह तस्याः मुखमवलोकयन्नास्ते)

प्रमीला (अपि माधवस्य मुखं क्षणमवलोक्य लज्जमाना परावृत्य उर्मिलामुखमवलोकयति)

माधवः (प्रकाशम्) "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरण-प्रवृत्तयः .....आगच्छन्तु सर्वे। प्रहरमतिक्रान्ता रात्रिः। प्रातरुत्थाय कार्येष्वग्रेसराः भवामः ॥

(निष्क्रान्ताः सर्वे)

इति द्वितीयं दृश्यम्

—तृतीयं दृश्यम्—

(परिष्कृतः उपभोग्यश्च ग्राममार्गः। ग्रामैकदेशे देवमन्दिरं विराजते। अदूरेऽपि मनोरमेण उपवनेन परिवेष्टितं सरोवरम्। दूरे परिदृश्यमाना नीलावरणा पर्वतश्रेणी। देवमन्दिरस्य चत्वरे उपविष्टा ध्यानमग्ना उर्मिला।)

उर्मिला—(स्वागतम्) ग्रामवासिभिः प्रदत्ते कृषिक्षेत्रे कृषिशिक्षा सम्यक् प्रचलति। मृत्तिकाऽपि नानुर्वरा। संस्थापितायां गोशालायां गोमयादीनामभावः न सम्भविष्यति। तैरनुर्वराऽपि भूमिः उर्वरा भवितुमर्हति। समुत्पन्नैः तृणैः गवादीनामाहाररसिद्धिः स्यात्। तैः प्रदत्तैः दुग्धैः गव्यैश्च पुष्टिकरखाद्यानां सम्भवः। कार्पासवृक्ष-रोपणं जातम्। वायदण्डारहट्टादीनि यन्त्राण्यपि संगृहीतानि, तन्तुवायाः कौलिकाः वयनशिक्षां प्रदास्यन्ति। अनावश्यकैः वल्कलैः पत्रैश्च सम्मिश्रिता मृत्तिका

सुसज्जिता वर्त्तन्ते। तया क्रीडनाकादयः संपत्स्यन्ते। सूचीतः कटाहादीनां निर्माणकौशलं ये ग्रहीतुमिच्छन्ति तेभ्यः निवेदयितुं ग्रामस्यास्य लोहकारा प्रस्तुताः सन्ति। विद्यालयस्यास्य गृहनिर्माणं समाप्तप्रायम्। उपकरणादीनि संगृहीतानि। सरकारीयकर्मतः प्राप्तावसराः प्रवीणाः उपदेष्टारः यथोपयुक्तमुपदिशन्ति। विश्वविद्यालयस्य स्नातकाः प्रशिक्षिताः कर्मकुशलाः विद्वांसः शिक्षकपदवीमङ्गीकृतवन्तः। बहवः छात्राः दूरतोऽपि समागताः पठन्ति। माध्यमिकशिक्षापरिचालकैः सम्वत्सरादस्मात् परीक्षाङ्गीकृतिः प्रदत्ता, तथापि असंपूर्णं कार्यमिदं मन्ये। न जाने कथं भगवदिच्छा सफला भविष्यति? (क्षणं विचिन्त्य उत्थाय च) भवत्विदानीं मन्दिरगात्रे चित्रितानि बालचित्रकराणां चित्राणि पश्यामि। (मन्दिर गात्रस्थं चित्रं पश्यति)

उमेशः— (प्रविश्य उर्मिलायाः पृष्ठमनुसरन् कदाचित् मन्दिरस्य चित्रं कदाचित् लास्यमयीं गमनभङ्गीम्, कदाचित् वा कृष्णां सर्पाकार वेणीमवलोक्य मनसि विचारयति। वाक्स्खलनेन चिन्तापि प्रकाशिता।) कथं ममेयं मनसः दुर्बलता? (इत्युक्त्वा पश्चादपसरति)

उर्मिला—(अवलोक्य ससंभ्रमम्) कदा समागतवान् भवान्? (मस्तके अवगुण्ठनं निदधाति)

उमेशः— अधुनैव......काष्ठवाहिभिः शकटैः साकं नियुक्ताः छात्राः अपरे शिक्षकाः ग्रामवासिनश्च अरण्यादागच्छन्ति।

उर्मिला—आगच्छतु भवान्, सरोवरे पादौ मुखञ्च प्रक्षाल्य चत्वरेऽस्मिन्.......

उमेशः—साधु भणितम्..... अथ अहं सरोवरादागमिष्यामि।

उर्मिला (तमनुसरन्ती उद्यानाभिमुखं गत्वा अस्तं गच्छता रविणा लोहितपाटलमाकाशं क्षणं विलोक्य पुष्पगुच्छं संगृह्णाति ।)

(नेपथ्ये समयेऽस्मिन् देवसेवकेन मन्दिरमुद्घाट्य घण्टाध्वनिः क्रियते ।)

उमेशः—(जलसिक्तमुखः प्रत्यागत्य पुष्पाणि ग्रहीतुमिच्छति)

उर्मिला—(प्रोञ्छनां तस्मै प्रददाति)

उमेशः—(मुखं करौ च प्रोञ्छन्) आगम्यताम । आरत्रिकावसरः आगतः एव (गन्तुमुपक्रमते)

उर्मिला—(पुष्पगुच्छं गृहीत्वा तमनुसरन्ती) अलं विलम्बेन । इयमहमपि आगच्छामि (गतवती)

इति तृतीयं दृश्यम्

## =चतुर्थं दृश्यम्=

(आरत्रिक दर्शनार्थं समवेताः ग्रामवासिनः, विद्यालयस्य शिक्षकाः, छात्राः शिशवश्च । तेषु युवानः छात्राश्च सम्मिलिताः देवस्तवं संग्रहं पठन्ति । अन्ये च ताननु पठन्ति । समाप्तायां स्तुतौ देवसेवकः देवप्रसादं सर्वेभ्यः निवेदयति । समयेऽस्मिन विपरीतपार्श्वतः प्रमीला माधवश्च उभौ देवं प्रणमतः । सेवकः ताभ्यामपि प्रसादं समर्पितवान् ।)

माधवः—(सगद्गदम्) राज्यस्यास्य शिक्षासचिवः मुख्येन शिक्षानिर्देशकेन सह अस्माकं ग्रामस्यास्य उच्चविद्यालयं परिद्रष्टुम् अद्य वात्र समागमिष्यति । अपरे च राज्यस्य विशिष्टाः नेतारः जनसेवकाः राजकर्मचारिणोऽपि समावेताः भविष्यन्ति । तानभिनन्दितुं वयमपि सज्जीभूताः भवामः ।

एको ग्रामवासी वृद्धः—कथं वा ते स... सायमत्रागमिष्यन्ति ?

प्रमीला—अस्माकं विद्यालयः राज्ये देशे चास्मिन् श्रेष्ठमौलिकविद्यालयत्वेन ख्यातिं लब्ध्वा सम्वत्सरस्य साधारणतन्त्रदिवसे राष्ट्रपति पुरस्कारं लप्स्यते । तस्य परिचालिका श्रीमती उर्मिला देव्यपि श्रेष्ठा समाजसेविका गान्धिविचारधाराप्रवर्त्तिका चेति प्रतिष्ठामधिगम्य राष्ट्रीयस्वर्णपदकविजयिनी जाता । विज्ञापयितुमेतत् अभिनन्दितुं वा शिक्षा सचिवः अत्रागमिष्यतीति मन्ये ।

माधवः—न केवल मेतावत्......अस्माकं ग्रामः आदर्शग्रामः, अतः तत् परिचालकश्च श्रीमानुमेशमिश्रः प्रख्यातः ग्रामसंगठक इति सम्मानशिखरमधिरूढवान् ।

वृद्धः—(सहर्षम्) तर्हि मणिकाञ्चनयोगः सञ्जातः ?

प्रमीला—(हसन्ती) योगसूत्रमिदानीं यावन्नान्विष्ठमस्माभिः ।

वृद्धः—(विचिन्त्य) सत्यम् ......तदर्थमहं यतिष्ये ।...... भवतु अभ्यागतानभिनन्दितुं इतः सर्वे गत्वा सज्जीभूताः तिष्ठन्तु इदानीम् । (माधववस्य समीपं गत्वा) प्रधानशिक्षकेन सह विद्यालयं याहि । कार्य्यजातञ्च संपादय । (प्रमीलायाः समीपं गत्वा) अभ्यागतानां भोजने विश्रामे च यथा बाधा नागच्छेत् तथा संपादनीयम् । तदर्थञ्च तुभ्यं ग्रामवासिन्यः यथेप्सितं साहाय्यमवश्यं प्रदास्यन्ति । (शिक्षकस्यैकस्य समीपं गत्वा) आलोचनामण्डपं छात्रैः साकं भवद्भिः यथाशीघ्रं निर्मातव्यम् । अपरे च युवानः ग्रामवासिनः युष्माकं साहाय्यकारिणः भवन्तु । विड़म्बेनालम् । गच्छन्तु भवन्तः । अहमपि गत्वा उर्मिला कुत्र तिष्ठतीति अवलोकयामि ।

(इति निष्क्रान्ताः सर्वे)

इति चतुर्थं दृश्यम्

= पञ्चमं दृश्यम् =

(जानुअरीमासस्य षड्विंशो दिवसः । दूरतः समागत्य ग्रामविद्यालये समवेताः अध्यक्षाः, अध्यापकाः, देशसेवकाः नेतारः, शासकाश्च । रक्षिभिः ग्रामरक्षिभिश्च यथोचितं रक्षितो ग्राममार्गः)

(नेपथ्ये—मान्यवराः राज्यपालमहोदयाः जातीयग्रामविद्यालयोद्घाटनार्थं ग्रामविश्वविद्यालयभित्तिस्थापनार्थंञ्च समागच्छन्ति । समयः समागतप्रायः वेदपाठः प्रारभ्यते इदानीम् । ॐ यज्जाग्रतो दूरम इत्यादि)

सर्वे—(उत्थाय नतमस्तकाः तिष्ठन्ति वेदपाठानन्तरमुपविशन्ति च)

पुनर्नेपथ्ये—ग्रामवृद्धः स्वागतीकृत्य मान्यवरान् राज्यपालान् महाविद्यालयोद्घाटनार्थं निवेदयति । श्रीमन्तः राज्यपालाः अपि आनुष्ठानिक्या रीत्या अनुष्ठानमुद्घाटितवन्तः ।)

सर्वे— (विस्मय विस्फारितलोचनाः अवलोकयन्ति ।)

(नेपथ्ये—विवाह वाद्यं मन्त्रपाठादिकञ्च)

(प्रविश्य) माधवः—मान्यवराः राज्यपालाः शिक्षासचिवाश्च नवदम्पतीमभिनन्दितुं, सम्मानास्पदानां मान्यवराणां राष्ट्रपति महोदतायामुपढौकनं प्रत्यर्पयितुञ्च प्रचलन्ति । समागच्छन्तु भवन्तः इतः परं विश्वविद्यालयभित्ति-स्थापनमहोत्सवः अनुष्ठास्यते ।

सर्वे—(उत्थाय गन्तुं समुत्सुकाः)

माधवः—महाभागाः ! समागच्छन्तु भवन्तः । (इति गन्तुमुपक्रमते)

(नेपथ्ये—पुनः विवाहवाद्यम् । कोलाहलेन करतालध्वनिना च लब्धम्भासाना नवदम्पती इहैवागच्छतः ।)

सर्वे – (ससंभ्रमं यथास्थानं दण्डायमानाः आसन्)

(ततः प्रविशतः वरवधूवेशेन उर्म्मिला उमेशश्च)

(उभे––सर्वेभ्यः यथोचितं सम्मानं निवेदयतः)

सर्वे – (तथा कुर्वन्ति)

उमेशः –सखे माधव ! सम्मानार्हान् बन्धून् पूजास्पदानतिथीन् च सादरं सेदस्व। तव सेवेदानीं अत्रैव विनियोगिनी भवतु। क्व गता प्रिय वान्धवी प्रमीला देवी ? तामपि मद्वचनात् निवेदय, परिचर्य्य विड़म्बना यथा न स्यात्।

माधवः—(सोपहासम्) वैदिकं कर्मजातं समाप्तं चेत् वान्धवी उर्मिला तव परिचर्यां परित्यज्य भित्तिस्थापनमण्डपं सत्वरं व्रजतु। अहमपि समागतान् विदुषः सादरं तत्र प्रवेशयामि। अत्रस्थो भवान् प्रमीलया सह पूज्यानर्च्चयितुं सज्जीभूतः तिष्ठतु। अपरे साहाय्यकारिणः यथावसर-मत्र प्रवेक्ष्यन्ति। (सर्वानभिलक्ष्य) आगच्छन्तु पूजास्पदाः भवन्तः (उर्मिलामभिलक्ष्य) समागच्छतु भवती भित्तिस्थापन प्रान्तरम्। अयमहमागत एव।

(इति सर्वैः सह निष्क्रान्तः)

यवनिकापातः

—०—

# वृद्धास्ते न विचारणीयचरिताः

(अनुवृत्तम)

लेखिका—श्रीमती विष्णुप्रियादेवी

इदानीं लवस्य द्वितीयमाक्षेपं विषयीकरोमि । स च "यानि त्रीण्यपराङ्मुखान्यपि पदान्यासन् खरायोधने" इत्येवंरूपः । इयं हि वस्तुस्थितिः । लक्ष्मणेन कृतवैरूप्यया शूर्पणखया चोदितः खरो रामलक्ष्मणयोर्वधमकिञ्चित्करं मन्यमानः प्रथमं तयोर्वधाय चतुर्दश राक्षससेनापतीन् प्राहिणोत्। ते च रामेण विनाऽऽयासेन विनिपातिताः। शूर्पणखा च तान् निहतान् दृष्ट्वा परंखिन्ना भ्रातुः खरस्यान्तिकमुपेत्य समुचितं प्रतीकारं कर्तुं सनिर्बन्धं प्रार्थयामास । खरो राक्षसानां निपातेन परं क्रुद्धो भगिनीं सुखयितुं लब्धप्रतिष्ठैः, महाकायेन स्थूलाक्षेण प्रमाथिना च त्रिभिः सेनापतिभिः, अमितपराक्रमेण भ्रात्रा दूषणेन, सङ्ग्रामेष्वप्रतिहतशक्तिना त्रिशिरसा च सहितः, चतुर्दशसहस्रकैरप्रधृष्यैश्चतुरङ्गबलैश्च परिवृतो रामलक्ष्मणयोर्वधाय प्रातिष्ठत । आपतन्तीं सुविशालां राक्षससेनां विलोक्य रामचन्द्रो लक्ष्मणेन बलवता हन्तुं शक्यामपि सेनां स्वयमेव हनिष्यामीति निश्चित्य स्वपादशपथेन लक्ष्मणं वारयन्, तं च जानक्याः संरक्षणे गुहां सम्प्रेष्य स्वयमेव सकलां सेनां हन्तुं प्रावर्तत । (१) प्रथमं महाकायाद्यास्त्रयः सेनापतयो बह्व्यश्च दुर्धर्षा राक्षसा एकेनैव रामेण विनिपातिताः।

---

१। "त्वं च शूरश्च बलवान् हन्या एतान्न संशयः ।
स्वयं निहन्तुमिच्छामि सर्वानेव वनेचरान् ॥
प्रतिकूलितुमिच्छामि न हि वाक्यमिदं त्वया
शापितो मम पादाभ्यां गम्यतां वत्स मा चिरम् ॥"
सेयं रामोक्तिरनुसन्धेया।

तदा पृष्ठभङ्गं दत्वा विद्रवतो राक्षासान् अभयदानपूर्वकं सान्त्वयन् रामेण साकं भीषणं संग्रामं कुर्वन् दूषणो रामेण लीलयैव समुत्सारितः । तं निपतितं दृष्ट्वा असमं क्षोभमाविश्य रामं हन्तुं त्वरमाणं खरं सहसोत्त्य वारयन् त्रिशिराः स्वयं समराङ्गण-मवततार । स्वयं च भयङ्करं युद्धं कुर्वन् रामेणैकेनैवानायासेन वाणैश्छिन्नशिरा भूमौ पतितः । ततो हतशेषा खराश्रया राक्षसा व्याघ्रत्रस्ता मृगा इव द्रवन्ति स्म । ततः खरो दूषणस्य त्रिशिरसश्च वधेन प्रवलितामर्षः स्ववलं च हतावशेषं पलायमानं दृष्ट्वा अतीवक्रुद्धो राममाक्रस्य शरजालैराच्छादितमकार्षीत् । तदा लीलयैव शरांश्छित्वा रामः खरेण साकं भीषणं संग्रामं चकार । खरस्य सारथिं हत्वा ध्वजं छित्त्वं रथं च भग्नमकार्षीत् । एवं हताश्वो हतसारथिः हतधन्वा च खरो भग्नाद्रथादवप्लुत्य गदापाणिः रामेण योद्धुं प्रावर्तत, तस्य च वधाय गदां प्राहिणोत् । सा च गदाऽनायासेन रामेण शरैश्छिन्ना, विशीर्णा सती च भूमावप्तत् । तदा किंकर्तव्य विमूढः खरोऽविदूरे अवस्थितं महान्तं शालमुत्पाट्य रामस्योपरि चिक्षेप । रामश्चापतन्तं महाशालं बाणौघैश्छित्वा रोषरक्तान्तलोचनः खरं बाणानां सहस्रेण निर्विभेद । एवं बाणसहस्रेण विभिन्नस्य खरस्य शरीराद्रक्तं धाराकारेण प्रसृतमासीत् । एवं रक्तं वर्षन् खरो रुधिरप्लुतो राममाचकाम । तदा रामो रक्तपातभयेन द्वित्राणि पदान्यपसृत्य पावकसंकाशेन इन्द्रदत्तेन ब्रह्मास्त्रेण खरं जघान ।

एवं रुधिरपातभयाद्रामस्य यत् द्वित्रिपदापसर्पणं, तल्लवो वीरस्य धीरोदात्तस्य रामस्य सर्वथा अनुचितमिति आक्षिपति । इदानीं सोऽयमाक्षेपो यथार्थः, आहोस्वित् अमूलक इति परीक्षणीयो भवति । संग्रामादपसर्पणं नियतं वीरस्यापकर्षायेत्यत्र सन्देहो नास्ति । परन्तु कीदृशमपसर्पणं वीरस्यापकर्षायेति "अपसर्पण"

पदार्थो निरूपणीयः। अपसर्पणं, निवृत्तिः, परावर्तनं, पलायनं, पृष्ठभङ्गः, पृष्ठदर्शनमित्येते शब्दाः प्रायश एकार्थकाः। "संग्रामे चापरावर्ती स्वर्गमक्षय्यमश्नुते" इति हि धर्मशास्त्रम्। पलायने शत्रुभ्यः पृष्ठं कृत्वा गम्यते। "नारयो लेभिरे पृष्ठं न वक्षः परयोषितः" इत्यादयो लौकिकोक्तयोऽपि एतदर्थकाः प्रचलिता दृश्यन्ते। शूरा हि संग्रामे प्रवृत्ता अम्लानमुखाः प्राणानुद्दद्वति, न पुनः परावर्तन्ते इति च लोके प्रसिद्धिः। अत्र विसंवादो नास्ति। पलायनं भवतु, निवर्तनं भवतु, अपसर्पणं भवतु, पृष्ठभङ्गो वा भवतु, सर्वत्र भयमनुस्यूतं वर्तते। ये किल वीरा संग्रामे भीषणे प्रवृत्ते कदाचित् प्राणहानिर्भवेदिति भीतभीताः संग्रामादपसरन्ति, निवर्तन्ते, संग्रामं विहाय गच्छन्ति, त एव निन्दनीया भवन्तीति तात्पर्यार्थः। अत्रत्यं भयं च अत्र प्रयुक्तं तद्वत् प्रयुक्तमित्यत्रापि न विसंवादोऽवर्तते। एवं च रामो यदि शत्रोस्तदीयाद्वा बलाद्भीतो द्वित्राणि पदान्यपावर्त्स्यत, तदा अवश्यमेव निन्दनीयोऽभविष्यत्। न चात्र रामस्य अण्वपि भयं समवर्ततेति कथं नाम स निन्दनीयो भवतु ?

रामस्यापसर्पणं भयप्रयुक्तमुतापरहेतुकमिति दर्शयितुं रामायणीयान्येतत्संपृक्तानि पद्यानि अध उद्ध्रियन्ते—

"तमापतन्तं बाणौघैश्छित्त्वा रामः प्रतापवान्।
रोषमाहारयत्तीव्रं निहन्तुं समरे खरम्॥

जातखेदस्ततो रामो रोषरक्तान्तलोचनः।
निर्बिभेद सहस्रेण बाणानां समरे खरम्॥

तस्य बाणान्तराद्रक्तं बहु सुस्राव फेनिलम्
गिरेः प्रस्रवणस्येव धाराणां च परिस्रवः॥

विकलः स कृतो बाणैः खरो रामेण संयुगे ।
मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद् द्रुतम् ।
तमापतन्तं संक्रुद्धं कृतास्त्रो रुधिराप्लुतम् ।
अपासर्पद् द्वित्रिपदं किञ्चित्त्वरितविक्रमः ।

ततः पावकसंकाशं वधाय समरे शरम् ।
खरस्य रामो जग्राह ब्रह्मदण्डमिवापरम् ॥
स तद् दत्तं भगवता सुरराजेन धीमता ।
संदधे च स धर्मात्मा मुमोच च खरं प्रति ॥
स विमुक्तो महाबाणो निर्घातसमनिस्वनः ।
रामेण धनुरायम्य खरस्योरसि चापतत् ॥
स पपात खरो भूमौ दह्यमानः शराग्निना ।
रुद्रेणेव विनिर्दग्धः श्वेतारण्ये यथाऽन्धकः ॥
स वृत्र इव वज्रेण फेनेन नमुचिर्यथा
बलो वेन्द्राशनिहतो निपपात हतः खरः ॥
रामायणे अरण्यकाण्डे त्रिंशः सर्गः ॥

सकृत् परिशीलयन्तु पद्यानीमानि सहृदयाः । एषु हि विरथो हतसैन्यो विफलीकृतसकलसाधनः खरः रामचन्द्रेण शराणां सहस्रेण छिन्नभिन्नाङ्गो धाराभिः रुधिरं स्रावयन् रुधिरगन्धेन मत्तः सन् राममभ्यद्रवदिति वर्णितमास्ते । सन्निहितं रुधिरस्राविणं खरमपक्रमितुकामो रामो द्वित्राणि पदान्यपसर्प्य इन्द्रदत्तेन महास्त्रेण जघानेति वर्णितमास्ते "विकलः सकृतो बाणैः खरो रामेण संयुगे" इति स्पष्टं लिखितमास्ते । एवं विकलीकृतः खरो रामस्य भयस्य उद्वेगस्य वा कारणं न भवितुमर्हति । केवलं रुधिराप्लुतस्य रुधिरगन्धेन च मत्तस्य स्वस्योपरि पतितुमुपक्रमतः खरस्य स्पर्शादात्मानं रक्षितुमेव रामो द्वित्राणि पदान्यपसर्प्य जघानेति स्पष्टमुल्लिखितमास्ते । ततो रामस्य द्वित्रपदापसर्पणं न भयहेतुकं

नापि पलायनोद्देश्यकमति सुस्पष्टं प्रतीयते । अपि चेदमपसर्पणं न पृष्ठप्रदर्शनपूर्वकं भवति । अतोऽत्र पृष्ठप्रदर्शनं नास्ति । रामस्य च चित्ते भयस्य सत्ताऽपि नासीत् । एष हि तादृशस्य दुर्धर्षस्य महतो बलस्य विनिपातनार्थं भ्रातुर्वीरस्य लक्ष्मणस्यापि साहाय्यं न स्वीचकार, तं शपथपूर्वकं विनिवार्य, प्रेयस्या जानक्या रक्षणे नियोज्य स्वयमेव सकलान् राक्षसान् हनिष्यामीति निश्चिकाय । स्वां प्रतिज्ञां च सफलीचकार । महतो राक्षसबलस्य संदर्शनेन तस्य मनसि ईषदपि क्षोभो नासीदिति स तान् दुर्दान्तान् राक्षसानतिथिरूपेण जग्राहेति च अधोनिर्दिष्टानि उदाहरणानि प्रमाणयन्ति—

"ते शराः शत्रुसैन्येषु मुक्ता रामेण लीलया ।
आददू रक्षसां प्राणान् पाशाः कालकृता इव ॥"
"दृष्ट्वैवापततस्तांस्तु राघवः सायकैः शितैः ।
तीक्ष्णाग्रैः प्रतिजग्राह सम्प्राप्तानतिथीनिव ॥
"तं सिंहमिव विक्रान्तं सिंहविक्रान्तगामिनम् ।
दृष्ट्वा नोद्विजते रामः सिंहः क्षुद्रमृगं यथा ॥

एवं च निर्भयमकातरं च शत्रुसैन्यानि मर्दयत एकस्य दुर्दान्तानपि दूषणत्रिशिरःखरान् अतिथीनिव गणयतः तादृशपराक्रमं खरमपि सर्वात्मना विकलं कृतवतो रामस्य मनसि कोऽपि विक्षोभोऽवर्तत, येन स भयात् समरात्पराङ्मुखो द्वित्राणि पदानि परावर्तत इति वक्तुं न कोऽपि साहसीत । सुतरां रामो न संग्रामान्निवृत्त इति, न पृष्ठं प्रादर्शयदिति, प्रबलानपि तान् शत्रून् अतिथीन् मन्यते स्मेति केवल रक्तसंस्पर्शादात्मानं रक्षितुकामस्य द्वित्रपदापसर्पणं न कस्मा अपि दोषाय अपकर्षाय वा प्रकल्पत इति दृढमुद्घोषयामि ।

( सावशेषम् । )

# प्रतिज्ञार्जुनम्

उन्मीलद्भुजगेन्द्रसान्द्रवलयः शार्दूलचर्माम्बरो
भास्वद्भस्मपटीरपाण्डुरवपुर्बालेन्दुचूडामणिः ।
सानन्दं समुदीक्ष्यमाणवदनः शैलेन्द्रपुत्र्या पुरः
स्तन्वंस्ताण्डवडम्बरं स्मरहरः पायादपायाज्जगत् ॥१॥

नान्द्यन्ते

सूत्रधारः—अलमतिविस्तरेण (नेपथ्याभिमुखमवलोक्य) प्रिये ! इतस्तावत्, इतस्तावत् ।

नटी—(प्रविश्य) एशम्हि । अण्णवेदु अज्जो को णिओओ अणुचिट्ठो अदुत्ति । (एषाऽस्मि । आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति ।

सूत्रधारः—प्रिये, आदिष्टोऽस्मि प्रचण्ड भुजदण्डनिष्कृष्टकृपाणमृगेन्द्रविहारितारातिप्रमत्तमतङ्गनेन शरदिन्दुसुन्दरयशःपीयूषप्रक्षालिताशासीमन्तिनीमुखेन अनवरतगुणिगणवितरणविहसितसुरतरुगौरवेण उत्कलमहीमण्डलाखण्डलेन श्रीमत्प्रतापकपिलेन्द्र महाराजेन—

नटी—अज्ज, किमादिट्टं तेण महाराएण ? (आर्य, किमादिष्टं तेन महाराजेन ?)

सूत्रधारः—प्रिये, श्रूयताम्—कविकुलकुमुदबान्धवेन पुरुषोत्तम दासकविना कृतमभिनवं प्रतिज्ञार्जुनं नाम नाटकं त्वया नाटयितव्यमिति ।

नटी—अज्ज, एदं सुणिअ मम अप्पा विआउलीभूदो । (आर्य, एतत् श्रुत्वा मम आत्मा व्याकुलीभूतः ।

सूत्रधारः—प्रिये, किमर्थं मा स्माव्याकुलीभूतः ?

नटी—सुणीअदु अज्जउत्तो । संगीदविज्जाणिउणा अम्हाण कुलवृत्ती । अम्हाणं तणयो अविद परिस्समो जादो। (शृणोतु आर्यपुत्रः । संगीतविद्यानिपुणा अस्माकं कुलवृत्तिः। अस्माकं तनयोऽविदितपरिश्रमः। )

सूत्रधारः- प्रिये, सत्यमेतत् ।

कुलविद्याविनोदेन यस्य पुत्रो विवर्द्धितः ।
विनश्यति सपुत्रोऽसौ वृद्धक्षत्रोयथाऽधुना ॥२॥

(नेपथ्ये)

आः पाप शैलूषापसद, किमुक्तम् ? किमुक्तम् ?

सूत्रधारः—(आकर्ण्य) प्रिये, सिन्धुनगरीनरेन्द्रः स्वराज्यं परित्यज्य तपसि वर्तमानः सचिन्त इतएवाभिवर्तते। अत्र स्थातुमनुमनुचितमावयोः ।

(इति निष्क्रामतः)

प्रस्तावना

ततः प्रविशति सचिन्तो राजा ।

राजा—अहो किमेतदन्यावृत्ति चेतः प्रवर्तते !

नान्तः स्थैर्यमुरीकरोति हृदये नासे तथा सर्वथा
स्वाङ्गं भङ्गमुपैति चित्तममलं कालुष्यमालम्बते ।
उच्चैः स्पन्दति वामलोचनमिदं किम्वा सजृम्भं मुखं-
मन्येऽनिष्टपरम्परा करगता दुर्दैवदोषादहो ॥३॥

(नेपथ्ये)

आतगाण्डीवधन्वन्, विषमसमरदुर्धर्षान् संसप्तकान् विजित्य त्वरितं समागच्छ । सर्वतस्ते मङ्गलं भवतु ।

राजा—(आकर्ण्य) कथमेते पञ्च पाण्डवा अभिमन्युसहिता आगच्छन्ति तन्न युक्तमत्र स्थातुम् ।

(निष्क्रान्तः)

(ततः प्रविशन्ति चत्वारः, पाण्डवाः, अभिमन्युश्च)

युधिष्ठिरः—धनुर्धरधुरीणस्य धैर्यसिन्धोर्वृकोदर !
जयः कृष्णसहायस्य नूनं संलक्ष्यते मया ॥५॥
वृकोदर, सर्वथा धनञ्जयस्य विजयं सम्भावयामः

भीमः—तवाज्ञयाऽत्र कः सन्देहः ?

जयाशा तत्र सर्वेषामस्माकं नात्र संशयः।
समरे दुर्धरे घोरे यत्र योद्धा धनञ्जयः ॥५॥

(ततः प्रविशति सुबुद्धिनामा चारः)

चारः—जयतु जयतु महाराजः। महाराज, कुरुबलसेनापतिना चक्रकारं सेनासमूहं कारयित्वा समरमध्ये प्रविशन्ति सर्वे कुरवः।

युधिष्ठिरः—(सविषादम्) वृकोदर, अत्र किं विधेयम् ?

भीमः—देव,

चक्राकारबलव्यूहभेद चिन्तितचेतसा
अर्जुनेन विना राजन् सर्वे खिद्यामहे वयम् ॥६॥

अभिमन्युः—द्रोणेन निर्मितं सेनाव्यूहं चक्राकृतिं मम।
विभिद्य गमने शक्तिर्न शक्तिपुनरागमे ॥७॥

युधिष्ठिरः—अये वत्स, एहि एहि। किमुक्तम् ? किमुक्तम् ?

अभिमन्युः—(पुनस्तदेव पठति)

युधिष्ठिरः—अये वत्स, चक्राकारबलभेदने समर्थोऽसि !
किमिति पुनरागमने न शक्तिविरोधः ?

अभिमन्युः— देव, श्रूयताम्—

गर्भस्थितेन वचनं कथितं जनन्या--
स्तातेन भूपतिमणे, कलितं पुरा मे।
चक्राकृतेर्बलचयस्य विभेदनाय
न्गतुं श्रुतं न पुनरागमनाय वृत्तम् ॥७॥

भीमः— अये वत्स, किमुक्तम् ? किमुक्तम् ?

चक्राकारचमूं विभिद्य सुमते सूचीमुखेनापि मे
द्रष्टव्या पदवी यदा हि गदया चूर्णीकरोमि द्विषः ।
भीमोऽहं भुजमन्दरेण गुरुणा संग्राम वारांनिधिं
सक्रोधं परिमथ्य भूपतिमणेः प्रत्यानयामि श्रियम् ॥९॥

अये वत्स,

दुःखं द्वादशवत्सरोद्भवमिदं पाञ्चलराजात्मजा-
वैलक्ष्यव्यसनं सविस्मयमिदं कुर्वेऽद्य गर्वाच्च्युतम् ।
धिक् क्षात्रं क्षितिपालनिन्दितमिदं कुर्वेऽद्य गर्वाच्च्युतम् ।
द्रोणेन द्विजदुर्मदेन रचितं सेयं गदा साक्षिणी ॥१०॥

युधिष्ठिरः—मन्त्रिकुलमौलिमणे, बुद्धिविनिन्दितसुबुद्धिसुरगुरो, अद्य समरसमारम्भस्य किमवसरोऽयम् ?

सहदेवः— ( विचार्य ) देव, अद्य समरसमारम्भकर्मणि नक्षत्राणां प्रतिकूलतां तर्कयामि । अत्र देवः प्रमाणम् ।

नकुलः— ( सापतक्यम् )

संलापः क्लीवताहेतुः क्षत्रियाणां दुरासदाम् ।
युद्धं विवृद्धये धाम्ना मन्ये मन्ये न संशयः ॥११॥

युधिष्ठिरः—सत्यमेतत् । प्रतिहारि,

द्वारी — आज्ञापय ।

युधिष्ठिरः—युज्यन्तां स्यन्दनेषु प्रखरखुरपुटाःस्पष्टरंहास्तुरङ्गाः
कल्प्यन्तां कुञ्जरेन्द्रा चिततनुलसद्धातुरेणूग्रसन्ध्याः ।
सन्नाहासन्नदेहा दिशि दिक्षि पदगाश्चापहस्ता भ्रमन्तां
स्वच्छन्दं सञ्चरामः समरभुवि वयं पाण्डवाः शौर्यचण्डाः ॥१२॥

( निष्क्रांतः )

चोरः—यदाज्ञापयति महाराजः ।

(पुनः प्रविश्य) देव, तवाज्ञया सेनाङ्गं द्वारि तिष्ठति ।

युधिष्ठिरः वत्स, सौभद्रेय, सेनापतिभूत्वा समरभूमिं गच्छ। वयमपि समरभूमिमवतरामः।

(सर्वे निष्क्रान्ताः)

(नेपथ्ये)

रे रे भीम क्व यासि प्रसरति समरे क्वाभिमानोऽभिमन्यो
अभ्यासन् भृतोऽसि प्रसरसि समरात् कुत्र रे द्रोणवीर।
पातुं कुत्रासि कर्णं प्रविशसि नकुल, व्याकुलत्वञ्चलाङ्गः
शीघ्रं हरते घृतोऽसि प्रसरसि सहदेवाद्य दुर्वातघतः ॥१३॥

(पुनर्नेपथ्ये)

अरे क्षत्रियापसद, मायाकल्पितप्रधन दुर्योधन
धिक् ते कपटनाटकनिदानं क्षत्रियाभिमानम्!
अकारणमयं सर्वैरभिमन्युः स्तनन्धयः।
युष्माभिर्मिलितैः पापं दुर्जयो मायया हतः ॥१४॥

(पुनः प्रविशन्ति चत्वारो भ्रातरः सारथिश्च)

युधिष्ठिरः—(सास्रम्) कष्टं भो कष्टम्!

उद्दामसंग्रामविभावभिज्ञ-
श्चैतन्यशून्यः सहसाऽभिमन्युः
अस्मासु वीरेष्वपि संस्थितेषु
प्राणैर्वियुक्तः खलु माययाऽऽसीत् ॥ १५॥

भीमः— धिङ् मे गदां दुर्मदवीरहन्त्रीं
धिङ् मे बलं नागसहस्रतुल्यम्।
धिङ् मे रणे भीमपदं ममोग्रं
मयि स्थिते बालसुतस्य नाशः ॥

नकुलः— शौर्यं बलं कुल्यमिदं धिगस्तु
धिङ् नो बलं बाहुजजन्म नो वा।
मयि स्थिते मुण्डशरीरचारे
बालोऽधुना कालवशाद् विनष्टः ॥

सहदेवः— अहो

पाण्डवानां रणेऽस्माकं युक्तो युक्तः पराभवः
वासुदेवं परित्यज्य यद् वयं समरं गताः ॥

(ततः प्रविशति चारः)

चारः—देव ! अज्जणेण सह वासुदेवो द्वारि चिट्ठदि ॥
(देव, अर्जुनेन सह वासुदेवो द्वारि तिष्ठति)

युधिष्ठिरः—(सकरुणम्)

जगत्रयीजित्वरसायकस्य मुखं निरीक्षे कथमर्जुनस्य
तथाविधे प्राणसमे तनूजे लोकान्तरस्थे विधिदुर्विपाकात्

सहदेवः— प्रतीहार ! कृष्णार्जुनौ प्रवेशय ॥

(ततः प्रविशतः कृष्णार्जुनौ)

अर्जुनः—महाराज ! अभिवादये ॥

कृष्णः— महाराज ! अभिवादये ॥

अर्जुनः—वासुदेव ! किमेतत् सर्वे भ्रातरो विषण्णवदनाः ?

कृष्णः— सखे ! धनञ्जय ! ममाप्यगोचरमेतत् ।

अर्जुनः—(सारथिमालोक्य) सारथे ! कथमेकाकी त्वमत्रैव ?

सारथिः—प्रभो ! किं विज्ञापयामि (इति मूर्च्छितः पतति)

अर्जुनः—आर्य सारथे ! समाश्वसिहि समाश्वसिहि ॥
सारथे ! कथय कथय ॥

सारथिः—(भुजयुगलात् शस्त्रं गृहीत्वा उत्थाय कथयति)
प्रभो तनयस्ते निपातितः ॥

अर्जुनः—हा हतोऽस्मि । (इति मूर्छितः पतति)

कृष्णः—सखे ! समाश्वसिहि समाश्वसिहि ॥

अर्जुनः— (समाश्वस्य उत्थाय च)

हा वत्स ! दुर्ललित सुन्दर वक्त्रचन्द्र
बन्धुप्रिय प्रथित विक्रमधैर्यसिन्धो ॥

एह्येहि देहि वचनं मदनावतार
यातोऽसि कुत्र पितरं परिमुच्य खिन्नम् ॥
(इति भूमौ निपतितः) ॥

कृष्णः— धनञ्जय, समाश्वसिहि समाश्वसिहि ॥
शूरोचितं पदं प्राप्ते तनये रणमूर्धनि ॥
वीरोचितां धुरं धृत्वा मुञ्च कापुरुषोचितम् ॥

अर्जुनः— सखे ! अपत्यविनाशादन्यत् कष्टं न विद्यते ॥
चक्राकृति भ्रमति संप्रति भूतधात्री
शून्या दिशः स्थगित पक्ष्मदृशो त्रयं किम्
हे धर्मराज ! तव धर्मविधिर्निरस्तः
पुत्रस्य रक्षणविधौ समाराहतस्य ॥

(भीमं प्रति)
पूर्वं प्रतिज्ञा कुरुवीरनाशे याः कल्पितास्ते भुवि भीमसेन
ताः सांप्रतं मे तनयक्षयाय सम्भाविता धिग् विधि
दुर्विपाकान् —

(सहदेवं प्रति)
प्रयाणे वातपुत्रस्य समरारम्भ कर्मणि
सहदेव महायुद्धे पाण्डित्यं तव खण्डितम् ॥

(सारथिमवलोक्य) सारथे ! पुत्रो मे यत्र
निपतति तां समरभूमिं प्रदर्शय ॥

सारथिः—प्रभो चक्राकरवलं ममाप्यगोचरम्

अर्जुनः— सारथे ! चक्राकार वलं केन निर्म्मितम् ?

सारथिः—प्रभो श्रूयताम् —
चक्राकार वलक्षयाय चलिताः श्रीधर्मराजादयः
श्रुत्वा तेऽप्यभिमन्यु पुत्रसहिता दुर्वारशस्त्रव्रजाः
खल्वेतेषु जयद्रथेन सहसा रुद्धेषु युद्धाशया
यातं त्वत्तनयं विभिद्य गुरवो जघ्नुर्भृशं मायया ॥

अर्जुनः—सारथे ! किमुक्तं किमुक्तम् ?

स्थितेष्वेतेषु चतुर्षु भ्रातृष्वपि च सङ्गरे
यद्वधं तनयो लेभे तत्र हेतुर्जयद्रथः ॥

(सक्रोधम्)

अस्मिन् पुत्रवधानले कुरुवलं काष्ठायतां निष्ठुरं
तत्राप्यस्य जयद्रथः श्रितरथः शीघ्रं पतङ्गायताम्
कार्य्याकार्य विचारणानिपुणताशूयोऽस्मि भग्नाशयः
कष्टं चन्द्रादिवाकरौ रणमुखे सम्भावितौ साक्षिणौ ।

(पुनः सक्रोधम्)

द्रोणद्रौणि कुरुप्रभु प्रभृतयो राधेयदुःशासनाः
पश्यन्तु प्रचुरास्त्रशस्त्रकलिता भीता रणप्राङ्गणे
हन्ताऽहं खलु सिन्धुराजतनयं मत्पुत्रविध्वंसिनं—
क्षात्रं वृत्तमुरीकरोमि सहसा किं श्वः प्रभातेन वा
शम्भुर्ब्रह्म पुरन्दर प्रभृतयो देवाः सहायाः सदा—
सञ्चाराः प्रभवन्तु नाम गिरयः किं सप्त पाथोधयः
गाण्डीवाहित तीव्रसायकशतैस्तेषां पुरस्तादहो
सत्यं सत्यमिदं जयद्रथमहं हन्तास्मि पुत्रद्विषम्

कृष्णः—धनञ्जय ! लोकान्तरगतानां पुनरावृत्तिः
कुतः ? कथमकारणेन प्रतिज्ञाभारो ध्रियते ॥

अर्जुनः—वासुदेव ! अपत्यनाशात् कष्टान्तरं न विद्यते ॥

(सक्रोधं परिक्रम्य)

क्षोणीन्द्रस्य युधिष्ठिरस्य चरणे द्रोहं, प्रकुर्वं तदा
गोघ्नोऽस्मि द्विजनाशकोऽस्मि जननीहन्तास्मि लोके ध्रुवम् ।
माया सङ्गरलूनवालतनयं मत् पुत्रविध्वंसिनं
हन्मि क्रूरशरप्रहाररचनैर्नं श्वः प्राभाते यदि ॥
हे गोविन्द चराचरत्रिजगतीजिष्णो पुरस्तादहो

सक्रोधं समुदीरयामि भवतो गाण्डीवपृष्ठं स्पृशन्,
आगच्छद्दिवसे जयद्रथमहं हन्ता न युद्धे यदा
सत्यं स्वीयतनुं जुहोमि दहने जाज्वल्यमाने तदा ।

(नेपथ्ये)

अरे क्षत्रियकुलकमलवर्च्चो ! चेतश्चमत्कारिणि
साहसकर्म्मणि, प्रवृत्तोऽसि !

अर्जुनः—वासुदेव ! किमिदम् ।

कृष्णः—दुस्तर तरङ्गिणीतरण प्रतिज्ञा त्वया कृतेति देवा व्याहरन्ति ॥

अर्जुनः—वासुदेव ! तव प्रसादात्, कोऽत्र सन्देहः ? ॥

(ततः प्रविशत्यपटीक्षेपेण चारः)

चारः—जयतु जयतु महाराजः कुरुबलसेनापतिना
द्रोणेन शकटाकारं सेनासमूहं कारयित्वा
समरमध्ये सर्वे कुरवः, प्रविशन्ति –

युधिष्ठिरः—(श्रुत्वा) वासुदेऽव
चक्राकारबलं भित्वा पुरा बालसुतो हतः
अधुना शकटव्यूहे स्थिते द्रोणे कुतो जयः ?—

अर्जुन—महाराज ! किमुक्तं किमुक्तम् ॥
अत्र गाण्डीवधारी न विद्यते किम् ?
चक्राकारबलं प्रकल्प्य कपटाद् द्रोणेन पापीयसा
संग्रामे निहतोऽभिमन्युरुदयं गर्वेण पूर्वं बलात् ॥
भिन्दं स्तच्छकटाकृते र्बलमहो द्रोणस्य मायार्ज्जितं
नेताऽहं यममन्दिरं तदधुना तं सिन्धुराजात्मजम् ॥

श्रीकृष्णः—सखे ! धनञ्जय ! रजनीविरताविति
समरभूमिं गच्छामः ॥

( इति निष्क्रान्ताः सर्वे )

इति प्रतिज्ञार्जुनम् ॥

—o—

# आमुखम्

प्रतिज्ञार्जुनाख्यं रूपकमिदं (१) कविकुलकुमुदबान्धवेन पुरुषोत्तमदासेन विरचितम् । उत्कलमहीमण्डलाखण्डल श्रीमत्-प्रताप कपिलेन्द्रदेवस्य राजसभायामभिनीतमिति सूत्रधर वचनात् स्फुटीभवति । तस्य कपिलेन्द्रदेवस्याभिषेकोत्सवः ख्रीष्टीय १४३५ अब्दे भुवनेश्वर नगरेऽनुष्ठितोऽभूदिति मादलाख्य पञ्जिकायाः ज्ञायते भुवनेश्वरस्थब्रह्मेश्वरमन्दिरापरपर्य्यायस्य पालिमठस्यामुखदेशे तदभिषेकोत्सवस्य शिलाप्रतिकृतिः इदानीमपि वर्त्तते । ख्रीष्टीय १४५६ अब्दे कृष्णानदीतीरे तस्य घटनाबहुलस्य जीवनस्यावसानमभूदिति ऐतिहासिकानामभिमतम् ।

"अनवरत गुणिगणगौरवेण" इत्यादिभिः विशेषणैः रूपकमिदं तस्य राज्यशासनस्य शेषदशायां रचितमिति प्रतीयते यतः तस्य राज्यशासनस्य प्राक्कालः समरकर्मणि नियोजितोऽभूत् ।

राज्यस्य सुदृढसुश्रृङ्खल शासनावसरे शिक्षा संस्कृतिप्रभृतीनामभिवृद्धिः सम्भाव्यते । कपिलेन्द्र देवस्य शेषदशायामुत्कलदेशे शान्तिश्रृङ्खलाः प्रतिष्ठिता आसन् । अतोऽमुमीयते रूपकमिदं तस्य शेषदशायामभिनीतमिति ।

कौतूहल प्रदमिदं यत् प्राचीनकाले उत्कलमण्डले जातीय-विजयधार्मिक पट्टोत्सवादिषु व्यायोगाख्यरूपकाणां अभिनयपरम्पर-

---

(१) प्रतिज्ञार्जुनं नाम व्यायोगः श्रीमत्या मनीषादेव्या संकलितः, M A. उपधिभूषितया मनीषादेव्या लिखितमामुखमपि मनोरमायां प्रकाशार्थं तस्याः पित्रा कविराज श्री वनमालि दासेन प्रेरितम् । पञ्चदशशताब्दीयो व्यायोगः सरसः प्राञ्जलश्च । सोऽयं व्यायोगो मनोरमापाठकेभ्य उपाह्रियते सम्पादकेन ।

आसीत्। तदनुकूलं मङ्गलाचरणं व्यायोगानां प्रारम्भे सन्निवेशितमभवत् । व्यायोगस्यास्य प्रारम्भे "उन्मीलद्भुजगेन्द्रसान्द्रवलयं ......पायादपायाज् जगत् ।" इति शिवस्तुत्यात्मकं मङ्गलाचरणं दृश्यते । अतः कस्यामपि शिवरात्रौ व्यायोगोऽयमभिनीत इति प्रतीयते ।

कपिलेन्द्र देवस्तु न केवलं सुशासकः समरनिपुणोऽप्यासीत् शिक्षा संस्कृत्यादीनां पृष्ठपोषकत्वेन भुवि ख्यातोऽभूत् । तस्यैव शासनकाले संस्कृतसाहित्यस्य च समधिका समृद्धिर्जाता । सारलादासस्तु तस्यैव शासनदशायां सुमहत् महाभारतग्रन्थमुत्कलभाषया ऽरचयत । नारायणमिश्र जलन्धरमिश्र नरसिंहवाजपेयि प्रभृतयः संस्कृतसाहित्यरसिकाः तस्य राजसभामलंचक्रुः । स्वयमपि परशुराम विजयाख्यं, व्यायोगं प्रणीय सुमहतीं ख्यातिमलभत । कपिलेन्द्रदेवस्य समराभियानमुत्कल देशस्येतिहासेऽविस्मरणीय स्मारकरूपेण चिरं प्रतिभाति। पूर्वघाट पर्वतमालावङ्गोपसागरमध्यवर्ति भूखण्डं, तथाच दाक्षिणात्यमालभूमेः पूर्वाञ्चल समेतं राज्यं तस्य शासनाधीनमासीत्। कपिलेन्द्रदेवस्य समग्र शासनकालः समरविजयसंकुलोऽभवत् । उत्कलस्य प्रजापुञ्जेषु समरायासं संसर्जयितुं नाट्याकारेण यथार्थविषयः निर्णीत इति मन्ये ।

संस्कृत साहित्येतिहासे रूपकाणां महती परम्परा वर्त्तते । आलंकारिकैः रूपकाणि दशधा विभक्तानि यथा—

(१) नाटकम् (२) प्रकरणम् (३) भाणः (४) व्यायोगः (५) समवकारः (६) डिमः (७) ईहामृगः (८) अङ्कः (९) वीथी (१०) प्रहसनम्।

रूपकाणां विभिन्नाभिमुख्यमभिलक्ष्य आलंकारिकैः विभिन्नाः संज्ञा निर्द्धारिताः प्रतिज्ञार्जुनाख्यं रूपकमिदं व्यायोगान्तर्गतं भवितु मर्हति।

ख्यातेतिवृत्ति र्व्यायोगः स्वल्पस्त्रीजनसंयुतः
हीनो गर्भ विमर्शाभ्यां नरैर्बहुभिराश्रितः
एकाङ्कश्च भवेदस्त्री निमित्तसमरोदयः
कौशिकीवृत्तिरहितः प्रख्यात सूत्रनायकः
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः
हास्यशृङ्गारशान्तेभ्यइतरेऽत्राङ्गिनो रसाः ॥

—साहित्य दर्पणम् =

व्यायोगस्तुग्रस्त्रीनिमित्त समरमवलम्ब्य
स्वल्प स्त्रीजनैः नरैः बहुभिश्चाश्रितः
एकाङ्कश्च स्यादिति आलकारिकैः सिद्धारितम् ॥
नायकस्तु तत्र प्रख्यात पुरुषः राजर्षिः धीरोद्धतः स्यात्।
पुनश्च व्यायोगः गर्भविमर्शाभ्यां सन्धिभ्यां कौशिक्या च
वृत्त्यां विहीनः हास्यशृङ्गारशान्तेभ्यः–
इतरे रसा अत्राङ्गीभूता :स्युः
प्रतिज्ञार्जुनेस्य व्यायोगत्वमत्र पर्य्यालोचितव्यम्।

अभिमन्योः चक्रव्यूह प्रवेशः, तत्र च तस्य निधनम्, तत्रान्तरे ऽर्जुनस्य युधिष्ठिरराजसमायां प्रवेशः। पुत्र निधनवार्त्ता श्रुत्वा जयद्रथवधार्थं अर्जुनेन कृतां प्रतिज्ञामवलम्ब्य रूपकमिद विरचितम्।

एकामवस्थामवलम्ब्य रूपकमिदं विरचितम्। नास्तीह स्त्रीभूमिका न वा स्त्रीमवलम्ब्य समरोदयः, युधिष्ठिरादिभिः बहुभिर्नरैः संयुतमिदं रूपकम्। अर्जुनस्तु अत्र धीरोद्धतनायकरूपेण वर्णितः। धीरोद्धतस्तु मायापरः, प्रचण्डः चपलः अहंकार भूयिष्ठः, आत्मश्लाघानिरतःस्यात्। भीमसेनस्य चरितमालङ्कारिकैः धीरोदित-नायक रूपेण वर्णितम्। परन्तु निष्करुणभावेन स्वतरुणतनयनिधिना-

अर्जुनः अत्र धीरोद्धतनायकरूपेणावतीर्णः । एतल्लक्षितं रूपकमिदं रौद्रकरुणरसाभ्यां यथायोग्यमाप्लुतम् ।

अर्जुनस्यागमनवार्तां श्रुत्वा युधिष्ठिरस्य मनसि सुदारुणः शोकखेदाः समजनिषत । शोकाकुलितेन युधिष्ठिरेणउक्तम् ,

"जगत्त्रयीजित्वरसायकस्य कथं निरीक्षे मुखमर्जुनस्य
तथाविधे प्राणसमे तनूजे लोकान्तरस्थे विधि दुर्विपाकात् ।

अर्जुनश्च युधिष्ठिरस्य राजसभायां प्रविश्य विषण्णवदनान् भ्रातृन् दृष्ट्वा विस्मयाभिभूतोऽभूत् । ततः सारथिमपृच्छत् , सारथे, कथं भ्रातरः सर्वे विषण्णवदनाः ? कथं वा त्वम अत्र एकाकी तिष्ठसि । ।भग्नकण्ठेन सारथिना उक्तं, 'प्रभो किं वच्मि, माया-समरे तनयस्ते जयद्रथेन निपातितः । एतच्छ्रुत्वाऽर्जुनः शोकाकुलितः सन् भूमावपतत् । पुनरुत्थाय अवदत्,—

'हा वत्स दुर्ललित सुन्दरवक्त्रचन्द्र बन्धुप्रिय प्रथितविक्रमधैर्यसिन्धो
एह्येहि देहि वचनं मदनावतार, यातोऽसि कुत्र पितरं
परिमुच्य खिन्नम् ।।

विभिन्नावस्थायां युधिष्ठिरभीमसेनयोः अर्जुनस्य च जयद्रथ-वधार्थं कृता प्रतिज्ञा रौद्ररसस्य प्रभावं विस्तारयति ।

व्यायोगसंज्ञा मधिकृत्य लक्षणानि रूपकेऽस्मिन् यथार्थतया प्रतिफलितानि । अर्जुनेन जयद्रथवधकृता प्रतिज्ञा, अनन्तरं रूपकमिदं समाप्तिमगात् ।

रूपकेऽस्मिन् द्वौ भागौ वर्त्तेते । प्रथमे भागे अभिमन्युः पाण्डवसेनानीः चक्रव्यूहं भिनत्ति तत्र च निधनं याति । द्वितीये भागे अर्जुनस्य यधिष्ठिर राजसभायां प्रवेशः, तत्र पुत्रवधवार्तां श्रुतवता

तेन जयद्रथ वधार्थं प्रतिज्ञा कृता । सुनिपुणेन कौशलेन द्वौ भागौ एकत्र समाधेश्य व्यायोगो नाट्यकारेण कल्पितः

नेपथ्यान्तराले चक्रव्यूहे प्रवेशः अभिमान्योः वधश्च सूचितः ।

सुसंयतपदविन्यासेन सर्वाणि चरित्राणि नाट्यकारेण सहृदयहृदयोल्लासकत्वेन प्रकल्पितानि ।

इदानीन्तनयुगे एकाङ्कयः बहुभिः विरचिताः, न केवलं समरविषयमवलम्ब्य परन्तु यस्मिन् कस्मिन्नपि विषये एकाङ्काः विरच्यन्ते । आश्चर्य्यमिदं यत् पञ्चशत वर्षेभ्यः उत्कलीय-संस्कृतनाट्यकारैः एकाङ्कनाटिकाः सर्वाभरणैः भूषयित्वा उपस्थापिताः । आधुनिकरूपक नुरूपं स्वल्प चरित् संयुक्तामेकावस्थाम-वलम्ब्य व्यायोगोऽयं परिकल्पितः, चरमा परिणतिश्च प्रदर्शिता । रौद्ररसस्य पुष्ट्यार्थमन्तरान्तरा करुणरससंयोगः अपूर्व चमत्कारित्वं पुष्णाति ।

परकालीनाः सौरंगाङ्गवंशकालीनाश्च कवयः पुरुषोत्तमदासेन सम्यक् प्रभाविता इति निशंशयं वक्तुं शक्यते ।

इति शम् ।

कटक नगरम्
ता २८।४।७१

श्री मनीषा देवी
सम्पादिका

# यज्ञतत्त्व प्रकाशः

यज्ञेश्वराय प्रभवान्तकपोषणाय
यज्ञेश्वराय नरकार्ण्णवतारणाय
यज्ञेश्वराय भवभीतिविनाशकाय
शर्वाय सर्ववपुषे प्रणतोऽस्मि नित्यम् ।१।

त्रिताप पाप संहार भास्करायित विग्रहम्
वन्दे नारायणं देवं सततं यज्ञरूपिणम् ।२।

कुर्वेऽत्र संग्रहं तस्य प्रसादात् वालवोधकम्
यज्ञ तत्त्व प्रकाशं हि श्रौत सूत्र विधानतः ।३।

कर्म प्रधानं सकलस्य लोके-तत्कर्म यज्ञार्थमभि प्रवृत्तम्
यज्ञो हि वेदप्रतिपाद्य एव वेदो मतो यज्ञमयो हि नित्यः ।४।

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः
यज्ञर्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मवन्धनः ।५।

यज्ञः कर्मषु श्रेष्ठः स्यात् यज्ञोऽयं सर्वकामधुक्
सहयज्ञाः प्रजाः सृष्टास्तस्माद् यज्ञमयो विभुः ।६।

दया, दानं, दमश्चैव त्रिविधं कर्म चोदितम् ।
यज्ञार्थमेव सकलं प्रत्यहं गृहमेधिनाम् ।७।

नास्त्ययज्ञस्य लोको वै नायज्ञो विन्दते शुभम्
अयज्ञो न च पूतात्मा नश्येच्च च्छिन्न पर्णवत् ।८।

यज्ञो देवाः प्रजाश्चैव यज्ञाज्जन्म वियोगिनः
सर्वं यज्ञास्सदा भान्ति सर्वं यज्ञमयं जगत् ।९।

यजन्तो वहुभिर्यज्ञैर्ब्रा ब्राह्मणा वेद पारगाः
शास्त्रज्ञाश्चेत् प्रमाणं स्युः प्राप्नुयुः परमां गतिम् ।१०।

नित्यस्वाध्यायशीलानां स्वाधीनेन्द्रियकर्मणाम्
यजतां जुह्वतां चैव जीवन्मुक्त व्यवस्थितिः ।११।

ब्रह्मार्पणं ब्रह्महवि र्ब्रह्माग्नौ ब्रह्मणा हुतम्
ब्राह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ।१२।

यज्ञेन देवा विमला भवन्ति
यज्ञेन देवा अमृतत्वमापुः

यज्ञेन पापै र्बहुभिर्विमुक्तः
प्राप्नोति लोकान् परमस्य विष्णोः ।१३।

यज्ञं योगात्मकं विद्धि योगः कर्मसु कौशलम्
संयोगो योगइत्याहु र्जीवात्म परमात्मनोः ।१४।

देवानां द्रव्यहविषां ऋक् साम यजुषां तथा
ऋत्विजां दक्षिणानां च संयोगो यज्ञ उच्यते ।१५।

इज्यन्ते सर्वदेवाश्च ब्रह्म प्रमुखतो यतः
तस्माद् यज्ञो वुधैः प्रोक्तः यज्ञो यज्ञपतिश्च सः ।१६।

यज्ञो नाम महत् कर्म यज्ञो वैं विष्णुरुच्यते
व्यष्टिसमष्टि सम्बन्धान्महायज्ञं प्रचक्षते ।१७।

यज्ञो वै परशुः प्रोक्तो-यज्ञः कर्मसु कौशलम्
पावनः सर्वलोका नांतस्माद् यज्ञस्तु पावकः ।१८।

वैदिकस्तान्त्रिको मिश्रश्चैवं यज्ञस्त्रिधा स्मृतः
श्रौतस्मार्त विभेदेन पुनर्यज्ञो द्विधोच्यते ।१९।

वैदिकाः वेदनिष्णाताः कर्मकाण्डविनिश्चिताः ।
श्रौतसूत्रप्रमाणोक्ताः मखाः जैमिनिसंमताः ।२०।

कलाविस्तारतो तन्त्रं-तन्यन्ते कलया यतः—
तस्माद्विस्तृतिमापन्नो यज्ञस्तान्त्रिक उच्यते ।२१।

पुनर्विस्तृति मापन्नाः स्मार्त्तं सूत्रानुयायिनः
पुराण सं मताः यज्ञा मिश्रितास्ते वुधैर्मताः ।२२।

औपासनं, वैश्वदेवं पार्वणं च तथाष्टकाः
मासि श्राद्धं भूतवलि रीशानवलिरेव च ।२३।

पाकयज्ञाश्च ते सप्त पितृयज्ञाश्च ते स्मृताः
अग्निहोत्रं च दर्शादिस्तथैवाग्रयणं महत् ।२३।

चातुर्मास्ये निरूढे च श्रोत्रामणिरतः परम्
एते सप्त हविःसंस्थाः मखाः स्युः श्रौत संमताः ।२४।

अग्नि रत्यग्निष्टोमश्च उक्थ्यः षोडशी सञ्चिका
अतिरात्राप्तोर्यामिश्च वाजपेयश्च यागकाः ।२५।

पाकयज्ञाश्च ते सप्त हविर्यज्ञा स्तथैव च
सप्तैव सोमसंस्थाश्च श्रौताः स्मार्तश्च सम्मताः ।२६।

सर्वं क्रतूना प्रथममाधानन्तु परं वरम्
अग्निष्टोम स्त्वनुष्ठेयः स्त्वतिरात्रोऽयवा सदा ।२७।

अतिरात्रे प्रथमतो यदि चेत्समनुष्ठिते
अधिकारस्तूत्तरेषु तेषु क्रतुषु सर्वथा ।२८।

अग्निष्टोमे प्रथमतः कृते तु किल वच्म्यहम्
क्रतूनामपि सर्वेषा मनुष्ठानाय योग्यता।२९।

उत्तरेषां भवेदेव नात्र कार्य्या विचारणा
अतिरात्रात्परं तस्यानुष्ठानं तु न चेष्यते ।३०।

अग्निष्टोमस्य मुख्यस्य नोत्तरक्रतुयोग्यता
एष हि प्रथमो यज्ञो निखिलानां मुखं परम् ।३१।

ततोऽत्येत्यष्टि होम: स्यादुक्थ्य: षोडशिका तत:
अतिरात्राऽऽप्तोर्य्यामी च वाजपेयश्च तत्क्रमः ।३२।

त एते सप्त संख्याका: सोमसंस्थाश्च सन्ततम्
अनुष्ठेया ब्राह्मणेनाकरणे प्रत्यवायका: ।३३।

असोमयाजित्वेनैवं को लोक: स्यान्महत्तर:
नैव जाने नैव जाने नैव जाने पुन: पुन: ।३४।

हविर्यज्ञा स्ततो भूयो ह्यग्निहोत्रं तत: पुन:
दर्शश्च पौर्णमासश्चाग्रयणं तत्परं तथा ३५।

ऋतुर्मास्यनि प्रोक्तानि निरूढ पशुरेव च
श्रौत्रामणि स्तत्परंस्यात्पितृ यज्ञोऽन्त्यउच्यते ।३६।

एतानि किल कर्माणि चतुर्दश महान्त्यपि
नित्यानि कथितानि स्यु: पावनानि द्विजन्मनाम् ।३७।

ब्राह्मण:पूतरातैः स्याद्रेतत्पर्वाणि तनि हि
औपासनं वैश्वदेवं पार्वणं त्वष्टका तथा ।३८।

मासि श्राद्धं सर्पवलिरीशानवलिरेव च
सप्तैते पाकयज्ञा: स्यु रेकविंशति संख्यया ॥ ।३९।

कथितानि समस्तानि गृहिणो न तु वर्णिनः
एते गृहस्थ विप्राणां पावनानां च पावना: ।४०।

औपासन परा देवा वेदा: शास्त्राणि कृत्स्नश:
तीर्थानि पुण्यक्षेत्राणि व्रतानि विविधान्यपि ।४१।

कृच्छ्र चान्द्रायणादीनि दानानि विविधान्यपि
तुलाभार मुखान्वेवं यदि लोकेऽधिकानि व ।४२।

फलाधिकानि वर्त्तन्ते तत्कथं तानि विन्दति
तस्मादौपासनं सायं प्रातश्चाप्सु समाचरेत् ।४३।

धृत्वोखया विशेषेण विवाहेऽग्नि विशेषवित्
विभृयादुखयैवेनं न तु भूमौ विनिक्षिपेत् ।४४।

कर्म स्मार्त्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निषु ।४५।

तथापि लौकिकाग्निः स्याद् वहिःशालासु तं यतः
अतो लौकिक नामाग्नौ कुर्वीत स्मार्तमेव हि ।४६।

भूमौ तु गार्हपत्यस्य स्थापनं स्मृति चोदितम्
औपासनस्य तत् प्रोक्तं मुखं कृत्वा ततो यमः ।४७।

पुरा तु ब्राह्मणाः सर्वे साग्निकाश्च क्रतुप्रियाः
कलौ निरग्निकाः सर्वे प्रायश्चित्त पराङ्मुखाः ।४८।

आधानं प्रथमं तस्मात् कथ्यते श्रौतमानतः
आधानात्तु परं यस्मात् क्रतुषु नोपलभ्यते ।४९।

मुख्यः कल्पः पावके स्यादग्नौकरणकर्मसु
तस्मादाधानतः सर्वे क्रतवः संप्रतिष्ठिताः ।५०।

औपासनेऽग्नौ कुर्वीत स्मार्त्तकर्माण्यशेषतः
नचैवाहवनीयेषु वैयर्थ्यं स्यात् श्रुते वचः ।५१।

वसन्तो ब्राह्मणस्यैव ग्रीष्मे राज्ञां तथैव च
वर्षासु चैव वैश्यानामग्न्याधानं प्रचक्षते ।५२।

अग्न्याधानं प्रकुर्वीत ह्यमायां वै श्रुतेर्बलात्
तत्रोपोष्य प्रतिपदि त्वाधानं यत्नतश्चरेत् ।५३।

कृत्तिका रोहिणी पुनर्मृगशीर्षश्च फाल्गुनी
एष्वृक्षेष्वादधीताग्निं पूर्वोक्तकालयोगतः ।५४।

चित्रा वै क्षत्रियस्य स्याल्लाभकामार्थं हेतवे
शुभलग्ने शुभांशे च यथोक्तेन विधानवित् ।५५।

गार्हपत्य गृहं तत्र तथैवाहवनीयकम्
अग्न्यागारं प्रकुर्वीत प्रागुदक्वंशपूत्रकम् ।५६।

आगारं गार्हपत्यस्य दक्षिणद्वारमेव च
तथैवाहवनीयस्य पूर्वद्वारं प्रचक्षते ।५७।

अशिखं वपनं कुर्य्यात्पौर्णमास्यवदाचरन्
नखच्छेदनमात्रञ्च स्त्रीणामत्र प्रचोदितम् ।५८।

स्नानात्परं वसेद्वस्त्रं क्षौमं वास्तमथापि वा
नित्यं कार्पासिकं वापि वास्तं कौशेयमेव च ।५९।

पूर्वेण प्रविशेत्कर्त्ता पत्नी च दक्षिणेन वै
एवं ह्याहवनीयस्य गार्हपत्यस्य च क्रमात् ।६०।

गार्हपत्य गृहे चैव निर्मथ्याग्निं प्रगृह्य च
गार्हपत्यखरे तत्र विधिना संनिवेशयेत् ।६१।

किम्वा वैश्य गृहाच्चैवाम्वरीष गृहतोऽपि वा
महानसाद्वापि पुनराहरेद् गौणकल्पतः ।६२।

गार्हपत्यस्य पश्चाद्वै यजमानो विशेद् व्रती
तस्य दक्षिणतः पत्युरुपविशेद् व्रतानुगा ।६३।

अश्वत्थगर्भाऽप्यथवा शमीगर्भाऽरणिर्भवेत्
अगर्भस्येव वा कुर्य्यादभावेऽश्वत्थमेव हि ॥६४।

ततो ह्यस्तमिते सूर्य्यो रात्रौ चाध्वर्य्युरेव च ।
आपूर्णाहुति पर्य्यन्तं वाचं यच्छेति वाचयेत् ६५ ।

अग्नीध्राय गार्हपत्येऽजं वध्नाति स्व शक्तितः
मूल्य कल्पनमेवं वा ह्यजानुकल्पतो भवेत् ।६६।

चत्वारि पाकपात्राणि-चातुष्प्राश्यं यथा भवेत्
व्रीहि तण्डुल युक्तानि स्थापयेत् क्रमयोगतः ।६७।

रक्ते चर्मण्यानुडुहे स्थापयित्वा ततः क्रमात्
पचेदेकत्र स्थाल्यां वा गार्हपत्येऽनले बुधः ।६८।

उद्वास्याऽऽसेचनं मध्ये कृत्वाऽऽसेच्य घृतं ततः
"समाधाग्नीति" मन्त्रेण।श्वत्थी स्तिस्रोऽ विनिक्षिपेत् ।।६९।

"उपत्वेति" जपेदत्र विकल्पेन न वा जपेत्
"सु समिद्धानि" मन्त्रांश्च जपेदध्वर्युरेव,च ।७०।

चत्वार ऋत्विजस्तत्र प्राश्नन्ति तृप्तितः क्रमात्
अध्वर्युर्यजमानं च राद्धस्वेति वदेत्ततः ।७१।

वरं ददाति च ततो।हिरण्यादि यथातथम्
ऋत्विग्भ्यो यजमानश्च धर्मसंग्रहणाय च ।७२।

तमेवाग्निं समाहृत्य चाग्निहोत्रार्थमेव.हि
अग्निहोत्रं च तत्राग्नौ प्रकुर्वीत यथाक्रमम् ।७३।

रात्रौ जागरणे तत्र कुर्वीत सस्त्रीको व्रती
अग्नेर्विधारणं कार्य्यं कोष्ठैर्वा शुष्कगोमयैः ।७४।

आधानोपक्रमो ह्येष उषस्येवाभिधीयते
नित्योऽभिप्रेत आत्माचेत् दक्षिणाग्निश्च तत्र वै ।७५।

गार्हपत्याद्दक्षिणस्यां दिशि तत्रानयेद् बुधः
तत्रोपशमितस्याग्नेः पञ्चभूसंस्कृतिस्तथा ।७६।

क्रमान्वयेन कुर्वीताध्वर्यु रेवात्र कर्मकृत्
कुशत्रयं गोमयं च वस्त्राभावे कुशत्रयम् ।७७।

तथाचोदक पात्रं च क्रमेणासादयेत्ततः
कुशत्रयेण प्राक् संस्थं खारे त्रिः परिसमुह्य च ।७८।

गोमयेनोपलिप्य त्रिः स्फ्येन प्रागयता क्रमात्
तिस्रो रेखाः प्रकुर्वीत ताभ्यो रेखाभ्य एव च ।७९।

पांशुंन्मनामिका ङ्गुष्ठैं रुद्धएभिः क्रमेण वै
अद्भिस्त्रिरेव चाभ्युक्षेत् ततश्चाग्निं समादधेत् ।८०।

खरश्चाहवनीयस्य चतुरस्रः समानतः
गार्हपत्य खरो वृत्तः सभ्यावसथ्यौ एव च ।८१।

अर्द्धचन्द्राकृतिश्चात्र इतरे द्वे क्रमात् स्याताम्
जुहोति यजति स्थाने चार्द्धं चन्द्राकृति र्यतः ।८२।

मध्यात्तु गार्हपत्यस्य पाच्यामष्टौ पदानि थै
एकादशं द्वादशं वा पदान्याहवनीयकम् ।८३।

शुल्वशास्त्र प्रमाणेन कोणे च दक्ष पश्चिमे
स्थानं प्रकल्पयेद्धीमान् दक्षिणाग्नेः स्थितिर्यदा ।८४।

पक्षे पादे द्वादशके षड्हस्त मिति कल्पयेत्
हस्तत्रये च मध्य स्थादनयोरिति निश्चयः ८५।

सप्तहस्तमितां रज्जुं गृहीत्वा तस्य चान्तयोः
पाशौ कृत्वा च मध्ये च तृतीये तृतीये पदे ।८६।

चिह्नदत्वं कं पाशं च सञ्चयेद् गार्हपत्यके
मध्यशङ्कौ द्वितीयं चाहनीयस्य मध्यतः ॥

शङ्का वासज्य मध्यस्य श्चिह्नतः पश्चिमात्ततः
रज्जुं गृहीत्वाऽथ पुन राकर्षयेच्च दक्षतः ।८८।

पतति यत्र तच्चिह्नं तस्मादुत्तरतः क्रमात्
सार्द्धनन्दाङ्गुलि देशे शङ्कुं विद्याच्च युक्तितः ।८९

केन्द्रत्वेनोपकल्प्याथ वृत्तं कुर्य्याद्विचक्षणः
यवाधिकेनविंशत्याङ्गुल मानेन त्रिज्यया ।१०।

पूर्वात्पश्चिमभागान्तं कुर्य्याद्रेखां च मध्यतः
त्यजेदुत्तर भागं च दक्षभागं च निर्दिशेत्
दक्षिणाग्नेः स्थानमिदं यथोक्तं परिचक्षते ।११।

उदितेऽनुदिते सूर्ये ह्यध्वर्युर्मन्थयेत् क्रमात्
उदितेनोद्धरेदग्निमिति श्रौतो विनिश्चयः ।१२।

गार्हपत्यस्य पश्चाद्वै मन्थन स्थानमीरितम्
अश्वमानयेति ब्रूयात् स्थिनोऽश्वे पुरतो न्यसेत् ।१३।

जातेऽग्नौ च वरं दद्यादध्वर्युं च यथोचितम्
दास्यामीति च संकल्प्य यजमानस्ततःपरम् ।१४।

"प्राणममृतेति" मन्त्रेण नन्दिकाया मुखेन वा
फुत्कारेणाग्नि धमनं कुर्व्वीताग्निप्रदीप्तये ।१५।

श्वासेन ग्रहणं कुर्य्याद "मृतं प्राणेति" मन्त्रतः
प्रकुर्वीत यथान्यायमाधानं च ततः क्रमात् ।१६।

गार्हपत्याधानम्—

अथातो गार्हपत्यस्याधानं किञ्चित् प्रचक्ष्यते
ज्वलन्तं दारुभिरग्नि मादधीत विचक्षणः ।१७।

भूर्भुवः स्वेति "मन्त्रेणा" "मुष्येति" चैव मन्त्रतः
आदधीत च सम्भारान् ब्राह्मणो ऋतु मानसः ।९८।

क्षत्रियो "वरुणस्येति' वैश्यो" "मनोष्ट्र" मन्त्रतः
विधिविदाधीताग्नि सम्भारांश्च यथोचितान् ।९९।

गायेद्रथान्तरमिति चाध्वर्यु प्रेषयेत्पुनः
ब्रह्मा वा वेदयोगाद्वै गायेदत्र रथान्तरम् ।१००।

इध्मं गृहीत्वा त्रियुतं बद्धं सन्नहनैरपि
मूलं च गार्हपत्येऽग्नौ प्रदीप्य खर्परस्थितम् ।१०१।

वालुकासु तथाऽऽरोप्य तेनेध्मेनैव चाग्निना
कुर्यादाहवनीयस्योद्धरणं वै यथा क्रमात् ।१०२।

इध्मेनोद्धरणं कृत्वा चालयन् व्यजनेन च
धूमोपेयान् यजमानो यथाशक्त्यनुसारतः ।१०३।

गायेच्चात्र "वामदेव्यं" प्रेष्यानु पूर्वकं ततः
पुरःस्थितोऽश्वोऽनड्वान् वा गच्छेदुद्धरणेऽग्रतः ।१०४।

एवमग्नेर्नीयमानमश्वं चाहवनीयकम्
हिरण्यादिकं सम्भारानश्वपादेन चाक्रमेत् ।१०५।

प्राञ्चं नीत्वा तमश्वं चावर्त्य प्राग्दक्षिणेन च
प्रत्यङ्मुखेन सांमुख्ये स्थापयेच्च ततःपरम् ।१०६।

बृहद्गायेद ब्राह्मणं च प्रेष्य गानपुरःसरम्
सम्भारस्योपरिकृताऽश्वस्येव दक्षिणे पदे ।१०७।

इध्मस्येनाग्निना स्पृष्ट्वा द्विवारं च तृतीयतः
तमग्निमश्वपादान्ते स्थापयेद् भूर्भुवे ति च ।१०८।

प्रागम्याहवनीयस्य पूर्वे प्रत्यङ्मुखेन वै
हस्तेनालम्य पूर्वार्द्धं इध्मस्याग्नि यथोदितम् ।१०९।

"द्युरिव भूम्नेति" मन्त्रेण यजमानः सुसंयतः
"श्रायङ्गा विति सृभिः" "रापराज्ञोभि" वा पठन् ।११०।

उपतिष्ठेत्तमग्नि वा आधानाहवनीयके
एवं च गार्हपत्याग्नेराधानं कथितं बुधैः ।११०।

दक्षिणाग्न्याधानम्—

एवमाहवनीये च दक्षिणाग्नौ तथा पुनः
पञ्च भू संस्कृतीः कृत्वा ततः कर्मं समाचरेत् । ११२।

शर्कराया निधानान्तं समाप्य पूर्ववत् क्रमात्
शर्कराश्च गार्हपत्ये पञ्चाशदिति कथ्यते ।११३।

त्रि सप्तति स्तथा चाहवनीये शर्कराः पुनः
द्वाविंशति दक्षिणाग्नौ विशेष इति चोच्यते ।११४।

दक्षिणाऽऽहृतमादध्यात् पूर्ववत् क्रमयोगतः
यावज्जीवं दक्षिणाग्निं धारयेदिति निश्चयः ।११५।

अथ सभ्याग्निः—निमथ्य च सभास्थाने सभ्यस्याग्नेश्च स्थापनम्
यत्रोपविश्य शिष्यांश्चाध्यापयेदिति सा सभा ।११६।

गां दीव्यध्व मित्युक्त्वा यजमानश्च ऋत्विजम्
उपस्थानम् भस्मोद्धृतमुपेयाच्च प्रातरेव सदा शुचिः ।११७।

उपस्थानं प्रकुर्वीत यजमानश्च नित्यशः
यावज्जीवमुपस्थानं स्वयं कुर्वीत यत्नतः
पूर्णिमायाममायां च जुहुयात् प्रातरेव हि ।११८।

श्वेतं च वारवन्तीयं यज्ञायज्ञीयमेव च
गायेत ब्रह्मा विधिवदव्ययं्ण, च प्रपितः ।११९।

सर्वानग्निं परिक्रम्याध्वर्यु मर्घ्यं तथोत्तरे
उत्सृजेच्च यथान्यायं तत आसादयेत् क्रमात् ।१२०।

पूर्णाहुतिः—स्रुक् स्रुवौ सन्निधौ स्थाप्यौ संस्कृताज्यं यथाविधि
स्रुवादेरपि संस्कारं कृत्वाऽध्वर्युः प्रमाणतः
यावत् स्रुक् न च पूर्येत स्रुवेणाज्यं प्रपूरयेत् ।१२१।

अन्वारब्धे यजमानो जुहूयादध्वर्युरेव वा
अध्वर्यवे वरं दद्यात् कर्मान्ते च स्वशक्तितः ।१२२।

अग्निहोत्रम्—अग्निहोत्रं ततः कुर्यात् स्वयमेव समाहितः
तूष्णीमेव सदा कार्यं मग्निहोत्रं द्विजन्मना
तैलं दधि पयः सोमो यवागूरोदनं घृतम् ।१२३।

तण्डूलाः फलमाषाश्च दश द्रव्याण्यकामतः ।१२४।
तत्र चाग्नेयी सौरी च द्वे प्रधानाहुती मते

दध्ना वा तण्डुलैर्वाथ प्रातः सायं हुनेत् क्रमात् ।१२५।
अग्नये प्रजापतयेचेति प्रातरेवाहुतिद्वयम्

"सूर्य्याय" प्रजापतये च स्वाहेति सायमेव च
चतुर्गृहीतेनाग्नेयीं हुत्वा पात्रान्तरे क्षिपेत् ।१२६।

चतुर्गृहीतेनापि सौरीं जुहुयाच्च विधानवित् ।।
शेषमेकीकृतश्चैवोत्तरं चैवात्र होमयेत् ।१२७।

इतो हि सर्वं यज्ञानामारम्भः स प्रचक्ष्यते
आधानं प्रथमं तस्मात् कथ्यते याज्ञीकोत्तमैः ।१२८।

आधानानन्तरं दर्शपौर्णमासौ क्रतू यतः
क्रतूनां प्रकृतित्वाच्च हूयन्ते यज्ञिकाश्च ये ।।१२९।

भृत्य उवाच--'एवमेव बाबो, अहं सुजनो भवामि ।'

रमेशः--बाबुः कुत्रागच्छत् ?

भृत्यः--भर्तृदारिकामादाय वायुपरिवर्तनार्थं पश्चिमां दिशं जगाम ।

रमेशः--कुत्र अगच्छत् ?

भृत्यः—नाहं तद् वक्तुं पारयामि ।

रमेशः--कोवाऽपरस्तैः साकमगच्छत् ?

भृत्यः--नलिनबाबुस्तैः साकं जगाम ।

रमेशः--कोऽयं नलिनबाबुः ?

भृत्यः--नाहं तद्वक्तुं पारयामि ।

रमेशः--प्रश्नजाडेन बुबोधे नलिनबाबुस्तरुणः किंयतोऽपि कालादत्र यातायाते कुर्वन्नास्त । यद्यपि रमेशो हेमनलिन्या आशां विहायैव तत्र जगाम, तथापि नलिनबाबोरुपरि तस्य सद्भावो नाकुप्यत ।

रमेशः-तव भर्तृद्वारिकायाः शरीरं कथमास्ते ?

भृत्यः–तस्याः शरीरं तु सम्यगेवास्ते ।

सुजनो मनसि चकार-तादृशस्य सुसंवादस्य श्रवणे रमेशबाबुर्निश्चिन्तो भवेदिति । परन्तु अन्तर्यामी जानाति-तत्र सुजनः अन्यथा अबुध्यत ।

रमेश उवाच--'अहं सकृत् उपरितनगृहं गमिष्यामि । भृत्यस्तस्य धूमोमुद्गिरन्तमुद्गिरन्तं भोम्र्त लप्रदीपमादाय रमेशमुपरितनगृहमानिनाय । रमेशो भूत इव प्रतिगृहं सकृत् कृतचङ्क्रमणः कामपि चतुष्किकां शोभनासनं चान्विष्य तदुपरि उपविशत् । सकलान्यपि वस्तूनि गृहस्य सज्जाऽपि पूर्ववेदवासन् । एतन्मध्ये कोऽयं नलिनबाबुरायातः ? पृथिव्यां कस्याप्यभावे किमपि बहून् दिवसान् यावत् नव रिक्तं तिष्ठति यस्य वातापनस्य सन्निधे रमेशः हेमनलिन्याः पुरतः

अवातिष्ठत, क्षान्तवर्षस्य श्रावणदिवसस्य सूर्यास्तगमनप्रभा तयोरन्तरस्य निःशब्दमिलनं स्वागतेनोपतस्थे, तस्मिन् वातायने किं सूर्यस्यास्तोन्मुखस्य प्रभा न पतति! तस्य वातायनस्य सविधे यदि कोऽप्यपरः पुनरप्येकदा युगलमूर्तिं कल्पयितुं कामयेत, तदा पूर्वमितिहास मुपस्थाय किं स्थानरोधं कुर्वीत ? निःशब्दं तर्जनीमुत्तोल्य तौ दूरमपसारयेत ? क्षुण्णेनाभिमानेन रमेशस्य हृदयं स्फीतं समजायत ।

परस्मिन् दिवसे रमेश आलाहवादमगत्वा सरलतया गाजिपुरं प्रातिष्ठत !

## ३४

कलिकतायां रमेशः प्रायशो मासमेकमतिवाह्य समागतः । सोऽयमेको मासः कमलाया नाल्पदिवसः । कमलाया जीवने कस्यापि परिवर्तनस्य स्रोतः सहसा सुमहता वेगेन वहति स्म । उषाया आलोको यथा पश्यतामेव प्राभातिकेन आतपेन परिणमति तथा कमलाया नारीप्रकृतिरल्पेनैव कालेन सुषुप्तेर्जागरणेन सचेतना उदतिष्ठत् । शैलजया सह तस्याः परिचयो यदि घनिष्ठो नाभविष्यत्, शैलजाया जीवनात् प्रेमालोकस्य छटा प्रभावश्च यदि तस्या हृदयाभ्यन्तरे नैव प्रतिफलितोऽपतिष्यत्, तदा कियान् कालस्तयाऽपेक्षितोऽभविष्यत, वक्तुं न शक्यते ।

एतदवसरे रमेशस्य प्रत्यावर्तने विलम्बं दृष्ट्वा शैलजाया विशिष्टेनानुरोधेन खुल्लतातः कमलादेव्यासार्थं पत्तनाद्बहिर्गङ्गायास्तीरे प्रासादमेकं भृत्या स्वीचकार । परिमितैरेवोपकरणैः स गृहीतं स्तमिमं प्रासादमाधासयोग्यं सम्पादयितुमायोजनं क्रियमाणमवर्तत, गृहकृत्यनिर्वाहार्थमपेक्षितान् परिचारकपरिपरिचारिकादीनपि नियोक्तुं काऽपि व्यवस्था अक्रियते ।

सुबहून् दिवसान् विलम्ब्य रमेशो यदा गाजिपुरं प्रत्यावर्तत, तदा खुल्लतातस्यावसथेऽवस्थातुं न कोऽप्यवकाशोऽवर्तत । एतेषु दिवसेषु कमला आत्मनः स्वाधीने गृहकृत्ये कृतप्रवेशा अजायत ।

प्रासादं परित उपवनकरणाय महदायतनं स्थलमवर्तत । उभयोः पार्श्वयोः श्रेणीबद्धानां शिरीषवृक्षाणामन्तराले काऽपि छायामयी सरणिरवर्तत । शीतर्तौ गङ्गायाः शीर्णत्वेन गङ्गायाः प्रासादस्य च मध्ये एका अनुन्नता स्थली संजाताऽऽस्ते । तत्र च कृषकाः स्थाने स्थाने गोधूमान् वपन्तोऽवर्तन्त, मध्ये मध्ये च त्रपुसर्वारुकादीन्यपि रोपितान्यासन् । प्रासादस्य दक्षिणेऽङ्गणे गङ्गाया अभिमुखं कोऽपि प्रवृद्धः सुमहान् निम्बवृक्षोऽवर्तत । तस्य च मूलभागो वेदिकया बद्ध आस्त ।

सुबहून् दिवसान् यावत् प्रासादोऽयं भृत्या नादीयत । सुतरां प्रासादस्तथा तदीयमायतक्षेत्रमनादृतमवर्तत । अत एव प्रासादं परित उपवने न केऽपि द्रुमा अवर्तन्त, प्रासादान्तर्गतान्यगाराणि च अपरिच्छन्नान्यसन् । परन्तु सकलान्यप्येतानि कमलयाश्चेतसोऽत्यन्तं रुचिकराण्यवर्तन्त । गृहिणीपदलाभेन समुदितानन्दप्रभया तस्या नेत्रयोः सकलमपि मनोरमवाभासत । कतमदपवरकं कीदृशकर्मणे उपयोजनीयं कुत्र कुत्र च कीदृशा वृक्षा रोपणीया—इत्येतत्सर्वं सा मनसा निश्चिन्वन्ती अवर्तत । खुल्लतातस्य परामर्शेन कमला सकलामपि भूमिं कृषिकार्ये योजयितुं व्यवस्थां चकार । स्वयमुपस्थिता रन्धनागारे चुल्लिकां निर्ममौ, तत्पार्श्ववर्तिनि भण्डारगृहस्य यद्यत् परिवर्तनं सा आवश्यकममन्यत, तत्सर्वं तथा अकुरुत । सकलमपि दिनं प्रक्षालनं मार्जनं परिष्करणमित्यादिभिः कृत्यजातैः व्यतीतमासीत् । सर्वत्र चतसृष्वपि दिक्षु कमलायाः काऽपि ममता समाकृष्यत ।

गृहकृत्येषु रमणीनां सौन्दर्यं यथा विकचनं मधुरं चावभासते न तथा अन्यत्र कुत्रापि । रमेशोऽद्य कमलां तादृशकृत्ये निरतां ददर्श ।

तां पञ्जरविनिर्गतां विहङ्गमीमिवालक्षयत। तस्याः प्रफुल्लमाननं सुनिपुणं पटुत्वं च रमेशस्य मनसि कामपि विस्मयस्यानन्दस्य च छायां जनयामासतुः।

एतावत्पर्यन्तं रमेशः कमलां तस्याः स्वरूपतो नाद्राक्षीत्। अद्य यदा तामात्मनो नूतनस्य संसारस्य शिखरे वर्तमानां ददर्श, तदा प्रत्यक्षीचकार तस्याः सौन्दर्येण साकमनुष्यूतं किमपि गौरवम्।

कमलायाः सन्निधिमुपेत्य रमेश उवाच "कमले, किं कर्तुं व्यवसिताऽसि! श्रान्ता क्लान्ता च सम्पद्येथाः।"

कमला आत्मनः कर्मणः किञ्चिदिव विरता रमेशाभिमुखं मुखमुत्तोलयन्ती किमपि मधुरं जहास, उवाच च "नहि। नमे किमपि विपद्येत।'

रमेशस्तस्यास्तत्त्वमन्वेष्टु समागतः। तदेव पुरस्कारं मन्यमाना अनुपदमेव स्वकर्मणि निविष्टचित्ता समजायत!

विमुग्धो रमेश छलनापुरःसरं पुनरपि तदन्तिकमुपसृत्योवाच 'अपि नाम कमले! तव भोजनमवसितम्?"

कमलोवाच। "साधु साधु! किं नाम भोजनं नावसितम्? कोऽपि कालो भोजनस्य कृतस्य।"

रमेशः कमलां भुक्तवतीं जानाति स्म। तथापि प्रश्नच्छलेन कमलायै स्वमादरं मविज्ञाप्य स्थातुं नापारयत। कमलाऽपि रमेशस्य तादृशेनानावश्यकेन किञ्चिदपि तृप्ता नावर्ततेति न।

रमेशः पुनरप्यालापस्य सूत्रपातं कुर्वाण उवाच "कमले, कियदेव-स्वयं कर्तुं प्रभवसि? मामपि तत्र नियोजयितुमर्हसि।"

कर्मपराणां जनानामयमेको दोषो यत्ते इतरस्य कर्मपटुतायां न कामप्यास्थां स्थापयन्ति। ते किल बिभ्यति, यदि ते स्वयं कार्यं न साधयन्ति, अन्येषु च पातयन्ति, तदा कदाचित् तदिदं कार्यं ध्वस्तं कुर्युः॥"

कमला स्मयमानोवाच—'नहि एतादृशानि कार्याणि त्वादृशाना-मभिप्रेतानि।

रमेश उवाच—"पुरुषाः नितरां सहिष्णव इति पुरुषान् प्रति युष्माकमियमवज्ञा अस्माभिः सहनीया भवति, न च विद्रोहः क्रियते। त्वमिव यद्यहं काचन महिला अभविष्यं, तर्हि अवश्यं कमपि प्रकाण्डं कलहमकरिष्यम्। अस्तु नाम। किमिति त्वं खुल्लतातं तियोजयितुं न कामपि त्रुटिं करोषि ? किमहं सर्वथा अकर्मण्यो भवामि ?"

कमलोवाच—नाहं जाने। परन्तु त्वं रन्धनगृहस्यावस्करं परिकरिष्यतीति मनसा करण एव हासो जायते। त्वमितोऽपसर-अत्र धूलय उड्डीयन्ते। रमेशः कमलया सह आलापमनुवर्तयितुमुवाच—"धूलयो न लोकविशेषान् कलयन्ते एते यया दृष्ट्या मां पश्यन्ति, तयैव दृष्ट्या त्वामपि पश्यन्ति।"

कमला—अस्माकं कार्यं वर्तत इति वयं तान् सहेमहि। तव तु न किमपि कार्यमास्ते। किमिति त्वं तान् सहेथाः ?

रमेशः भृत्यानां कर्णौ वञ्चयित्वा मृदुना स्वरेणोवाच—कार्यमस्तु मा वा, त्वं यत्सहसे, अहं तत्र भागं नयामि।

कमलायाः कर्णमूलं किञ्चिदिवारुणं समजनि। रमेशस्य प्रश्नस्योत्तरमदत्त्वैव ईषद्विहस्य उवाच—"उमेश, अत्रापर जलकलसं निषिञ्च, पश्चात्-कियदिदं मलीमसं वर्तते ! सकृत् सम्मार्जनीं मम हस्ते कुरु—पश्यामि।

एवमभिधाय सम्मार्जनीं गृहीत्वा सुमहता रभसेन सम्मार्जने आत्मानं न्ययोजयत।

रमेशः कमलां हठात् सम्मार्जयन्तीमवलोकय ससम्भ्रममुवाच-'अये कमले, किं त्वं करोषि ?

पश्चादश्रूयत—रमेशबाबो, किमित्यत्र अन्याय्यमास्ते ? भवादृशा आङ्गलभाषामधीत्य वाचैव साम्यवादं प्रचारयन्ति ?

सम्मार्जनं यदि तथा गर्हितं, किमिति ते तत्स्वभृत्यैः कारयन्ति ? मूर्खोऽहं, यदि मम वचनमाद्रियते, तर्हि मातुः सम्मार्जन्याः प्रत्येकं खटिकाः सूर्यस्य रश्मय इव मम पुरतः समुज्ज्वला अवभासन्ते। मातः, तदिदमरण्यं मया रिक्तीकृतम् : कुत्र शाकक्षेत्रं कल्पनीयं सकृन्मां दर्शय।"

कमलोवाच—'कुल्लतान, ममेदं गृहसम्माजनमवसितप्रायम्।

एवमभिधाय कमला गृहसम्मार्जनं समाप्य कटिबद्धमञ्चलं शिथिलीकृत्य शिरसि निधाय वहिरागत्य खुल्लतातेन साकं शाकक्षेत्रमधिकृत्य गभीरायामालोचनायां प्रावर्तत।

एवमादिभिः कृत्यजातैः पश्यतामेव तेषां दिनमवसितमासीत्, किन्तु गृहस्थ सज्जीकरणं यथाशासितं नैवान्तं जगाम। प्रासादोऽयमनेकादिनावधि अव्यवहृतो रुद्धश्चावर्तत। पुनरपि त्रिचतुान् दिवसान् यावत् गृहार्यादि न प्रक्षाल्यन्ते, गवाक्षाश्च यदि नोन्मुक्ताः स्याप्यन्ते, तदा गृहा नैव वासोपयोगिनी भवेयुरिति निर्धारितम्।

कार्यतः पुनरपि सन्ध्यायां सर्वेऽपि खुल्लतातस्यालये आश्रयमभजन्त। अद्य रमेशस्य मानसं किञ्चिदिव दान्तमवर्तत। अद्य तेषां निभृते आलये सन्ध्याप्रदीपो ज्वलिष्यति। अपि च रमेशः कमलायाः ... मभवच्चिन्तस्य हासस्य पुरतः आत्मनः परिपूर्णं हृदयमावेदयिष्यतीति सकलमपि दिवसं संकल्पयन्नवर्तत। पुनरपि त्रिचतुराणि दिनान्यपेक्षणीयानीति विभाव्य स न्यायालयप्रवेशकार्ये आलाहावादं चलति स्म।

—०—

३५

परस्मिन् दिवसे कमला नूतने आवासे नवान्नं भोक्तुं शैलजामामन्त्रयत। विपिने आहारं स्वीकृत्य कार्यालयं गतवति शैलजा निमन्त्रणं सम्मानयितुं प्रावर्तत'। कमलाया अनुरोधेन खुल्लतातस्तस्मिन् दिने सोमवासरे विद्यालयं किञ्चित्पूर्वं संहृत्य प्रत्यावर्तत। उभौ निम्बवृक्षस्याधः पाकं साधयितुं प्रवृत्तो। उमेशस्तयोः कार्ये साहाय्यमादधःनोऽवर्तत।

पाके आहारे च निर्वृत्ते खुल्लतातो गृहाभ्यन्तरं प्रविश्य मध्याह्ननिद्रायां प्रवृत्तः। ते सख्यौ निम्बवृक्षस्य तले छायायामुपविष्टे तयोश्चिराभ्यन्तेषु आलापेषु निविष्टचित्ते अभूताम्। आलापेषु तेषु निमज्जन्त्याः कमलायाः पुरतः नद्यास्तीरं शीत आतप निम्बवृक्षस्यछाया नितरामपरूपाण्यवाभासन्त। तस्य मेघशून्यस्य आकाशस्य यावति दूरे रेखेव कश्चन श्येन उड्डीयानोऽवर्तत, तावत्येव दूरे कमलाया हृदयाभ्यन्तरस्था निरुद्देशा काप्याकांक्षा उदासीना उदडीयत।

अनस्तमित एव मिहिरे शैलजा किञ्चिदिव व्यस्ता समजायत तस्याः स्वामिनः प्रत्यावर्तनं सन्निहितमासीत्। कमलोवाच—"किं सखि, एकदिनमपि तव नियमभङ्गः असहनीयो भवति ?"

शैलजा तस्याः प्रश्नस्य किमप्युत्तरमददती ईषद् स्मयमाना कमलायाश्चिबुकं धृत्वा अधुनुत, प्रासादे च प्रविश्य तस्याः पितुर्निद्रां विभज्योवाच—'तात, गृहमहं गच्छामि।'

कमलामुद्दिश्य खुल्लतात उवाच—'मातः, त्वमेतामनुसर।'

कमलोवाच—'नहि। मम किमपि कर्तव्यमवशिष्यते। अहं सन्ध्याया अनन्तरं यास्यामि।'

खुल्लतातस्तस्य पुरातनं भृत्यमुमेशं च कमलायाः सन्निधावुपस्थाप्य कमलां गृहं प्रापयितुं प्रातिष्ठत। तत्र तस्य किमपि करणीयमास। प्रस्थानसमये अवीचत्-'न मम प्रत्यावर्तने महान् विलम्बो भविता।''

कमला यदा तस्या गृहकृत्यं समाधितवती, तदा सूर्यो नास्तं गत आसीत्। सा शिरसि शरीरे च किमपि प्रावरणमावृत्य निम्बवृक्षस्य छायायामुपाविवेश। दूरे तीर्थे यत्र सुवृहतो द्वित्राः केतुदण्डा अग्निवर्णस्याकाशस्य शरीरे कृष्णवर्णान्यिञ्जनानि व्यावृत्य अवर्तन्त, तेषां पश्चात् समुन्नतस्यायतनस्यान्तराले सूर्योऽन्तर्नातं जगाम।

एतदवसरे उमेश केनापि छलेन तस्या अन्तिक मुपसृत्योवाच—"मातः, बहून् क्षणान् यावन्न त्वया ताम्बूलं सेवितम्। अत्रागमनसमये मध्येमार्गं मया ताम्बूलवीटिकाः सम्पाद्यानीताः।"

एवमभिधाय स काकलावृता कतिचन ताम्बूलवीटिकाः कमलाया हस्ते दत्तवान्।

तदा कमला अबाबुध्यत सन्ध्योपगतेति। सा सम्भ्रममुदतिष्ठत्। उमेश उवाच—'चक्रवर्तिना बाबुना यानं प्रहितमास्ते।'

कमला यानारोहणादर्वाक् प्रासादस्यापवरकाणि पुनरवेक्षितुं प्रसादान्तः प्राविशत्।

सुमहति प्रासादे शीततो बहिनिप्रज्ज्वालनाय पाश्चात्यधरण्योपकल्पिता एका चुल्लिका अवर्तत। तत्संलग्ने पीठे काऽपि मृत्तैलदीपिका ज्वलति स्म। सा तस्मिन् पीठे ताम्बूलकरण्डिकामाधाय किमपि पर्यवेक्षितुं प्रवृत्ता। तदा सहसा कस्मिन्नपि काकलसमुद्गके रमेशस्य स्व हस्ताक्षराङ्कितं नाम तस्या दृष्टिगोचरमजायत।

उमेशं सा पप्रच्छ—"कुत इदं काकलसमुद्गकमासादितम्।"

उमेश उवाच—"गृहकोणं सम्मार्जयन्नहं तत्र पतितमिदं काकलसमुद्गकमासादितम्।"

कमला तदिदं काकलसमुद्गकमुद्घाट्य पठितुं प्रावर्तत।

हेमनलिनीमुद्दिश्य रमेशः तस्मिन् दिने विस्तृततया यत् पत्रमलिखत्, स एष लेखः। प्रकृतिशिथिलात् रमेशस्य हस्तात् विच्युतं तत्पत्रं कुत्रावातिष्ठत, तत् रमेशस्य हृद्गोचरं नावर्तत।

कमलायाः पठनमवसितम्। उमेश उवाच 'किमेवं तूष्णीमवतिष्ठसे, रात्रिः परावर्तते।'

गृहं निस्तब्धमवातिष्ठत।

कमलाया मुखमवेक्ष्य उमेशो भीतः समजनि। स उवाच 'मातः, किं मां न शृणोषि? गृहं प्रतिष्ठस्व, रात्रिरायाता।'

कियत्क्षणानन्तरं खुल्लतातस्य भृत्य उपेत्योवाच "मातः, यानं बहुक्षणावधि अपेक्षमाणं वर्तते, एहि गृहं यामः।"

३६

शैलजा पप्रच्छ—'भगिनि, किं तव शरीरमसुस्थं वर्तते? किं शिरोव्यथा बाधते?

कमलोवाच—'नहि। किमिति खुल्लतातो न दृश्यते?

शैलजोवाच—'इदानीं विद्यालयस्य स्रीस्तमासप्रयुक्तो विरामो जातः। कियतो दिवसान् यावत् अग्रजायाः शरीरं न सुस्थमास्ते।

कमलोवाच—'स कदा प्रत्यावर्तेत?

शैलजा—तस्य प्रत्यावर्तने प्रायशः सप्ताहमेकं विलम्बो भवेत्। त्वदीयप्रासादस्य सज्जीकरणे त्वं सकलमपि दिनं समधिकं परिश्रमं करोषि। त्वमतीवाश्वस्था परिलक्ष्यसे। अद्य पूर्वाह्ण एव भोजनं कृत्वा स्वपिहि।

कमला यदि शैलजायैं सकलमितिवृत्तं वक्तुमपारयिष्यत्, तदा रक्षिता अभविष्यत्। किन्तु न तद वक्तव्यमासीत । 'यमेतावदात्मनः स्वामिनमज्ञासिषं, स मे स्वामी न भवति' एतदन्यस्मै वक्तुं शक्यते चेच्छक्यतां नाम न पुनः शैलजां वक्तुं शक्यते ।

कमला शयनागारमागत्य कपाटमत्यवरुध्य प्रदीपस्य आलोके रमेशस्य तत्पत्रं पुनरपि पठितुं प्रावर्तत । पत्रमिदं यामुद्दिश्य लिखितं तस्याः संकेतोऽपि नास्ति, किन्तु सा काचिल्ललना, रमेशेन साकं विवाहस्य प्रस्तावः समवर्तत, केवलं कमलामादायैव स प्रस्तावो भग्न इति पत्रादस्मात् स्फुटं प्रतीयते । यामुद्दिश्य पत्रं लिखितं, तामेव रमेशो हृदयेन साकं कामयते, केवलं दैवदुर्विपाकात् कुतोऽप्यागत्य कमला तदुपरि पतितेति अनाथेति दयमानस्तदीयं प्राचीनं स्नेहबन्धनं छेत्तुं प्रवृत्त इत्यपि पत्रे न निह्नुतं वर्तते ।

रमेशो यदा कमलां निःसन्देहं परस्य वधूं जानीते, तत एव च तामादाय कथं चलनीयमिति किं कर्तव्यविमूढ आस्ते, तदा कमला निश्चितमानसा तं स्वामिनं परिगल्लन्ती निःसङ्कोचं तेन साकं चिर-स्थायिनं गृहिणीसम्बन्धं स्थापयितुं व्यवस्यतीतीयं लज्जा पुनः पुनस्तां शल्येन विध्यति स्म । प्रतिदिनं स घटिताः पूर्वा कथा आलोच्य सा आत्मानं मेलयितुमियेष । सेयं लज्जा तस्या जीवनेऽनुष्यूता संजाता, न कदापि तस्या निष्कृतिः सम्भवति ।

अवरुद्धं द्वारमपावृत्य कमला वहिरुपवनमापतिता । शीतलौ रात्रिरन्धकारमयी । कृष्ण आकाश कृष्णप्रस्तर इव किञ्चिदिव शीतलः । कुत्रापि न न वाष्पस्य सत्ता नावर्तत । नक्षत्राणि सुस्पष्टं ज्वलन्ति स्म ।

सम्मुखे दोहदीकृताम्रवृक्षावली अन्धमारं वितन्वाना अवर्तत । कमला यथाकथञ्चिदपि किमपि निर्णेतुं न प्रबभूव । सा शीतले तृणावर्ते उपविवेश । काष्ठस्य प्रतिमेव निश्चला संजाता । तस्याः चक्षुर्भ्यां नैकोऽप्यश्रुविन्दुरपप्तत् ।

एवमवस्थितायास्तस्याः कियती वेला व्यतीयेत नैव वक्तुं शक्यते। परं तु तीव्रं शीतं तस्या हृत्पिण्डमान्दोलयति स्म। तस्याः सकलमपि शरीरं कम्पितुमारभत। गभीरायां रात्रौ कृष्ण-पक्षस्य चन्द्रोदयो यदा निस्तब्धे तालवनस्यान्तराले अन्धकारस्य कमपि प्रान्तं चिच्छेद, तदा कमला शनैः शनैरुत्थाय गृहं गत्वा कपाटमवरुरोध।

प्रभाते कमला चक्षुषी उन्मील्य खट्वापार्श्वे वतिष्ठन्तीं शैलजां ददर्श। समधिका वेलाऽतीतेति लज्जिता कमला ससम्भ्रम-मुत्थाय शय्यायामुपाविशत्।

शैलजोवाच—"भगिनि नोत्तिष्ठ, किञ्चिदधिकं स्वपिहि। नियतं तव शरीरं नैव सुस्थमास्ते। तव मुखमतीवशुष्कं दृश्यते। नेत्रयोरधोभागः कृष्णः संजातः। किं तव समजनि, मां सकृत् कथय।"

एवमभिधाय शैलजा तस्याः पार्श्वे उपविश्य कण्ठं गाढमा-श्लिष्टवती।

कमलाया वक्ष उत्फुल्लमजायत। तस्या अश्रु न प्रतिरोधमस-हत। शैलजायाः स्कन्धे मुखं निवेश्य तस्याः क्रन्दनं सहसोद्भिन्नं सद्बहिराजगाम। शैलजा किमप्यनुक्त्वा तां दृढमाश्लिष्यन्ती धृतवती।

क्षणादनन्तरं कमला ससम्भ्रमं शैलजाया। बाहुबन्धनमवधीर्य उदतिष्ठत्, चक्षुषी उन्मील्य बलादिव हसितुं प्रावर्तत। शैलजो-वाच—"अये तिष्ठ तिष्ठः, न पुनर्हसनीयम्। मया बहवो बाला दृष्टाः, न त्वादृशी एतावच्चपला दृष्टा। किं त्वमभिमन्यसे आत्मानं मम पुरतो गोपायितुम्, नाहं तादृशी सरला! किं कथयामि? अये रमेशबाबुरालाहाबादं गत्वा एतावदवधि न पत्रमेकमलिखत्। तेन ते कोपः! अभिमानिनी! किन्तु त्वयाप्येतदवधारणीयम्—स तत्र कार्यानुरोधेन गतः दिनद्वयाभ्यन्तरे प्रत्यावर्तेत! तेन स समयो रक्षितुं न पारित इति एतादृशः कोपः कर्तुमुचितः? अये!

त्वामिदमुपदिशामि, परं तु अहमपि एतादृशेषु घटनेषु त्वमिव कार्यमकरिष्यम् । एवं कृतकं क्रन्दनं महिलानामसकृत् सम्भवति, परन्तु यथेदं क्रन्दनमपसरति, हासश्च उद्भिन्न उत्तिष्ठति, तदा न किमपि स्मृतिगोचरं तिष्ठति।

एवमभिधाय कमलां वक्षसा गाढमाश्लिष्य उवाच–'किमधुना त्वं मनसि कलयसे रमेशबाबुं न कदापि त्वं क्षमेयेति ? तदेतत् सत्यं खलु ? अस्तु, ब्रूहि सत्यम् ।"

कमलोवाच "एवमेव । सत्यमेव वदामि ।"

शैलजा कमलाया गण्डं करतलेनाहत्योवाच—इस् ! तदेव ? द्रक्ष्यते । पणं कुरु ।"

कमलया सह सम्भाषणानन्तरमेव शैलजा आलाहाबादेऽवस्थितस्य पितुरन्तिकं पत्रं प्रेषयामास । तत्र लिलेख 'कमला रमेशबाबोः सकाशादेषु दिवसेषु किमपि पत्रमनासादयन्ती परं चिन्तयन्ती वर्तते । प्रथमत एषाऽत्र नवीना विदेशिनी । ततःपरं रमेशबाबु यदा तदा एनामत्र विसृज्य गच्छति, न च पत्रमपि लिखति । एतेन कियदिव दुःखं न जायेत सकृत्परिशीलनीयम् तस्य आलाहाबादे कार्यं कदाऽवसीयेत ? कार्यं तु सर्वेषां तिष्ठत्येव, किन्तु तदिति किं पत्रं लिखितुमपि नावकाशो लभ्यते ।"

खुल्लतातो रमेशेन साकं मिलित्वा दुहितुः पत्रस्य कमप्यंशं श्रावयित्वा तं गर्हयति स्म।

कमलां प्रति रमेशस्य मनो महता परिमाणेन समाकृष्टमिति सत्यम् । किन्तु समाकृष्टमित्येव तस्य द्वैधीभावः समधिकमवर्द्धत ।

एतस्मिन् द्वैधीभावे निहितो रमेशः यथाकथञ्चिदपि आलाहाबादतः प्रत्यावर्तितुं न शशाक । एतदवसरे खुल्लतातस्य सन्निधौ शैलजायाः पत्रस्यांश शुश्राव ।

पश्चात्सम्यगवाबुध्यत—कमला रमेशस्य परमुद्विग्ना, परन्तु लज्जया स्वयं लिखितुं नापारयदिति।

एतेन रमेशस्य द्वे शाखे क्रमश एकीभूते अजायेताम्। इदानीं न केवलं रमेशस्य सुखदुःखयोः प्रसङ्गः, कमलाऽपि तं हृदयेन कामयते। विधाता न केवलं तौ नद्याः पुलिने समयोजयत्, तयोर्हृदये अपि एकमकार्षीत्।

एवं विभाव्य रमेशः क्षणमप्यविलम्ब्य कमलायै पत्रं लिखितुं प्रावर्तत। स लिलेख—

प्रियतमासु—

कमले, ममेदं भाषणं पत्रलेखनरीतेः कश्चन क्रम इति न परिगणय। यद्यहं त्वां पृथिव्यां सर्वेभ्योऽपि समधिका प्रियेति नाज्ञास्यं तदा कदापि 'प्रियतमा' इति पदेन सम्भाषितुं नापारयिष्यम्। यदि कदाचित्ते सन्देहः समजायत, यदि कदाचित्ते सुकोमले मानसे कमपि आघातमहमकार्षम्, तं सन्देहं, तां च वेदनां ममानेनावितथेन 'प्रियतमा'सम्भाषणेन प्रक्षालयितुमर्हसि। एतदपेक्षया किमधिकं विस्तृत्य त्वां लिखामि? एतावदवधि मम बहून्याचरणानि नूनं तव व्यथाजनकान्यभवन्, तदर्थं मनसा यदि त्वमपि विरुद्धा अभियोगं कृतवत्यसि, तदाऽहं प्रतिवादं न करोमि। अहं केवलमभिदधामि--अद्य त्वं मम प्रियतमा, त्वदपेक्षया समधिकं प्रियवस्तु न मम वर्तते—एतेन यदि मम सकलानामपराधानां सकलानामसङ्गतानां चाचरणानां समाधानं न भवति, तदा न केनापि समाधानं सम्भवति। अतएव कमले, अद्य त्वां 'प्रियतमा' पदेन संबोध्य अस्माकं संशयाच्छन्नमतीतमपासारयम्, अनेन च 'प्रियतमा' संबोधनेन अस्माकं कामनाया भविष्यन्तं च स्वागतीकरोमि। त्वदन्तिके ममेयं चरमा विज्ञप्तिः—त्वमिदानीं मे प्रियतमाऽसीति दृढं विश्वसिहि। यद्येवं त्वं स्थिरतया परिग्रहीतुं प्रभवसि, तदा तव कमपि संशयमादाय न प्रतिकस्यापि प्रश्नस्य जिज्ञासायाः प्रयोजनं न सम्भवेत्।

ततःपरं, अहं त्वां कामये वा न कामये इति त्वां प्रष्टुं न मे साहसमस्ति। नाहं कदापि पृच्छेयम्। ममास्यानुच्चारितस्य अनुकूल-मुत्तरमेकदा तव हृदयाभ्यन्तरात् मदीयं हृदयाभ्यन्तरं नीरवतया प्रवेक्ष्यतीत्यत्र मम सन्देहस्य लेशोऽपि नास्ति। इदमहं मम गाढस्यानु-रागस्य प्रभावेण वच्मि। नाहं योग्य इत्यहङ्कारं करोमि—किन्तु मम साधना कुतो न सार्थिका सम्पद्येत ?

अहं सम्यगवगच्छामि—यदहं लिखामि, तत् किञ्चिदपि सहजं न भवति। तत्कवितेव प्रतिभासते। इच्छा मे उदेति तदिदं पत्रं विच्छेत्तुम्। किन्तु यत् पत्रं मम मनसोऽनुकूलं भवेत्, तदिदानीं न सम्भवति, कुत इति चेत् पत्रं द्वौ पक्षौ विषयीकरोति। यदि केवलमेकः पक्षः पत्रं लिखति, तदा तस्मिन् पत्रे सकलोऽपि विषयो विस्तृत-तया लिखितुं नैव शक्यते। यदा तव मम च मनोरथस्य विज्ञानं नावशिष्येत, तदैव मनोभिमतं पत्रं लिखितुं प्रभवेयम्। प्रतिमुखं यदि द्वारद्वयमुन्मुक्तं तिष्ठति, तदा गृहे समीरणोऽबाधतया प्रवहति। कमले, प्रियतमे कदा वाहं ते हृदयं सम्पूर्णतया उन्मोचयितुं प्रभवेयम् ?

एतादृशानां सकलानामपि विषयाणां मीमांसा क्रमशो भविष्यति—तदर्थमातुरता नावश्यकी। यदा त्वमिदं पत्रं प्राप्स्यसि, तत्परस्मिन्नेव दिने प्रातरहं गाजिपुर उपतिष्ठेय। तत्र पुरतो ममाय-मनुरोधः यदहं त्वां गाजिपुरे अस्माकमावास एव पश्येयम्। बहूनि दिनानि गृहाच्च्युतस्येव मे व्यतीतानि। नातः परं धैर्यं वर्तते—इदानीं गृहान्तः प्रवेक्ष्यामि, हृदयस्य लक्ष्मीं गृहलक्ष्मीस्वरूपिणीं द्रक्ष्यामि। तदा आवयो द्वितीया शुभदृष्टिः संजायेत। अपि नाम स्मरसि त्वमावयोः प्रथमां शुभदृष्टिम् ? तस्यां ज्योत्स्नोद्भासितायां रात्रौ, तस्मिन् नदीतटे, जनशून्ये वालुकास्तूपे ! तदा नासीन्दमवर्तीन न प्राचीरम्, न पिता न माता, न भ्राता, नापि प्रतिवेशी आत्मीयो,

जनः तदिदं स्थानं गृहाद्विप्रकृष्टम् । स किल स्वप्न इव, न किमपि यथार्थम् । तदर्थम् अपरस्मिन् एकस्मिन्नदिने स्निग्धनिर्मले प्राभातिके वालोके गृहाभ्यन्तरे तां शुभदृष्टिं सर्वात्मना सम्पूर्णां कर्तुमपेक्षा वर्तते । पूते पौषमासस्य प्रभाते अस्माकं गृहस्य द्वारदेशे त्वदीयां सरलां सहासां च मूर्ति चिरजीवनं यावत् मम हृदयाभ्यन्तरे अङ्कितां कर्तुमहं परं साग्रहस्तिष्ठामि । प्रियतमे, अहं तव हृदय द्वारे अतिथिः, न मां प्रत्यावर्तयितुमर्हसि ।

प्रसादभिक्षू रमेशः

## ३७

शैलजा श्रान्तां कमलां किञ्चिदिवोत्साहयितुमुवाच–"किमद्य तवावसथप्रासादं न गमिष्यसि ?"

कमलोवाच –"नहि ! न पुनरावश्यकता वर्तते ।"

शैलजा—तव गृहस्य सज्जीकरणं किमवर्तम् ?

कियतः क्षणादनन्तरं शैलजा आगत्योवाच--"यदि किमपि वस्तु वितरामि, तर्हि किं मह्यं दास्यसि ?"

कमलोवाच–"किं ममान्तिके आर्ये वर्तते ?"

शैलजा—किं यथार्थतः किमपि नास्ति ?

कमला–न किमपि ।

शैलजा कमलायाः कपोले करेणाहत्योवाच—"अये तथत्र । "यत्किमप्यवर्तत– मन्ये, तत्सर्वमेकस्मै समर्पितवत्यसि ?" एव-मभिधाय शैलजा स्वाञ्चलात्कमपि लेखं बहिश्चकार ।

लेखस्योपरि रमेशस्य हस्ताक्षराणि विलोक्य कमलाया मुख-मीषत्पाण्डुरमजायत-साः मुखमीषत् विवर्तयामास ।

शैलजोवाच--"अये नेतः परमभिमानो दर्शनीयः, समधिको दर्शितः । एकतो लेखमिमं व्याक्षिप्य नेतुं हृदभ्यन्तरे उत्कलिका

उदयते–किन्तु मुखेन न निगदसि चेत् नाहमिमं दास्यामि । न कदापि दास्यामि । पश्यामि कियन्तं क्षणं त्वमात्मनः पणं रक्षितुं प्रभवसि !

एतस्मिन्नवसरे उमा शोधन (Soap) पेटिकां रज्ज्वा आबध्य आकर्षन्ती वक्तुमारभत "मातृष्वसः ग, ग, इति ।

कमला सहसा उमामङ्कं गृहीत्वा असकृत् चुम्बमाना शयनागारं निनाय । उमा तस्याः शकटचालने प्रत्यवायं विलोक्य उच्चैरुदितुं प्रावर्तत । परन्तु कमला कथमपि न तां परितस्याज । तां स्वगृहं नीत्वा नानाविधैः प्रलापवाक्यैः प्रबोधयितुं सरभसं प्रावर्तत ।

शैलजा आगत्योवाच "तवैव जयः, पराजयो मया स्वीकृतः नाहं प्राभवम्, धन्या बालिका ! भगिनि, तमिमं गृहाण किमिति अहमभिशप्ता भवेयम् ।"

एवमभिधाय लेखं कमलायाः शय्यायां पातयन्ती उमां कमलाया हस्तादञ्चलादाच्छिद्य कक्षे कृत्वा प्रातिष्ठत ।

लेखमादाय कमला इतस्ततश्चालयन्ती उदमोचयत । प्रथमे पङ्क्तिद्वय एव दत्तदृष्टेस्तस्या आननमारक्तं समपद्यत । लज्जया लेखमिमं छित्त्वा भूमावपातयत् । प्रथमाघातस्य तादृशं वितृष्णमाक्षेपं कथञ्चिद्विसह्य तमिमं छिन्नलेखं भूतलादाहृत्य सकलमपि पपाठ। सकलमपि विषयं साऽवाबुध्यत उत नाबाबुध्यत- किन्तु तस्या मनस्युदियाय सा स्वहस्तेनैकं पदार्थमालोडयति । पुनरपि सा तमिमं लेखं न्यक्षिपत् । यः किल तस्याः स्वामी न भवति, तेन साकं गृहं करणीयमिति एतदाह्वानम् । रमेशो जानान एव एतावत्पर्यन्तं तस्या अपमानमकुरुत । गाजिपुरं समागता सा स्वं हृदयं रमेशस्याभिमुखं प्रासारयत्-इति किं रमेशाय आहोस्वित् स्वामिने ? रमेशस्तदिदं लक्षयन्नास्त । तत एव सः अनाथां दयमानः प्रणयलेखमिममलिखत् ! अमर्यादः कमला रमेशस्य सन्निधौ यं कमपि स्नेहं प्राकाशयत, कथमिदं सा प्रत्याहरतु ? एतावती लज्जा एतावती घृणा किमिति

कमलाया भाग्ये समघटत ? सा लब्धजन्मा कस्य पुरतः कमपराधं कृतवती ? इदानीं गृहमिति किमपि वीभत्सं वस्तु कमलां ग्रस्तुमायातम्। कथं सा उत्मानं गोपायतु ? रमेशस्तस्याः पुरत एतावती विभीपिका सम्पद्यतेति दिनद्वयात्पूर्वं किं स्वप्नेऽपि कल्पयितुं प्रभवेत् ?

एतदवसरे 'गृहसविधे उमेश उपस्थाय किञ्चिदिव अकासत। कमलायाः सकाशात् कमपि संकेतमनधिगत्य स मृदुना स्वरेण समबोधयत—'मातः'

कमला द्वारान्तिकमाजयाम 'मातः, अद्य विधुवावो दुंहितुर्विवाहावसरे कलिकतातः काऽपि यात्रागोष्ठी समायाता।"

कमलोवाच--"साधु. उमेश, त्वं यात्रां द्रष्टुं गच्छ।"

उमेशः—श्वः प्रभाते, किं पुष्पमानेतव्यम् ? कमला—नहि नहि। न काऽपि पुष्पस्य आवेश्यकता वर्तते।

उमेश प्रचलितमालोक्य, सहसा तं प्रत्यावर्त्योवाच 'उमेश, यात्रादर्शनार्थं गच्छसि, गृहाणैतद्रूप्यकपञ्चकम्"

उमेशो विस्मितः समजनि। यात्रादर्शनेन रूप्यक पञ्चकस्य कः सम्बन्ध इति स नावाबुध्यत। सशङ्कश्चोवाच "मातः, किं नगरात् त्वदर्थं किमप्यानेयमास्ते ?"

कमला—नहि नहि। नाहं किमपि कामये, त्वमेतदादत्स्व तवैव कार्यं व्ययस्व।'

यावद्धतबुद्धिरुमेशः प्रस्थातुमुपक्रमते, तावत्सा पुनरप्युवाच-- 'अरे उमेश, त्वमेतद्वस्त्रं परिधाय यात्रां द्रष्टुं गच्छसि। लोकाः किं ब्रूयुः ?"

लोका उमेशस्य परिच्छदविषये ततोऽधिकं प्रत्याशसीरन् त्रुटिं च कामपि अवेक्ष्य पर्यालोचयेयूरिति उमेशस्य तादृशी धारणा नावर्तत। अतएव अन्तरीयस्य परिशुद्धताया उत्तरीयस्य चक्रान्ताभावेन स सम्पूर्णतया उदासीन आस्त। कमलायाः प्रश्नं श्रुत्वा किमप्यनुक्त्वा केवलमीषज्जहास।

एवमभिधाय कमला आत्मनो द्वे शाटिकायुगले पेटिकातो बहिष्कृत्य उमेशस्य पुरतः पातयन्ती उवाच-'नयस्व एतानि '। गच्छ, परिधत्स्व "

शाटिकानां प्रान्तेषु समुदोर्णां दशां विलोक्य उमेशः अत्यन्त-मुत्फुल्लः समजायत । तस्याः पादयोः पतित्वा अङ्गुष्ठ स्पर्शेन प्रणनाम। अपि च हासदमनार्थं विफलया चेष्टया मुखं विकृतं कृत्वा प्रातिष्ठत। उमेशे प्रस्थिते कमला चक्षुषोरश्रुकणानपनयन्ती गवाक्षसन्निधिमागत्य तूष्णीं दण्डायमाना तस्थौ।

शैलजा गृहं प्रविश्योवाच-'भगिनि, कमले, किं त्वदीयं पत्रं मां न दर्शयिष्यसि ?'

कमलायाः पुरतः शैलजाया न किमपि गोपनीयमवर्तत । अत एव शैलजा तावदभ्यो दिवसेभ्योऽनन्तरमवकाशमुपलभ्य तदिद-मभ्यर्थयत ।

कमलोवाच--'अये तदिदं पत्रम्, पश्य' इत्युक्त्वा पुस्तकाधान्या उपरि पतितं पत्रमदर्शयत् । शैलजा विस्मिता । मनसि चकार-नैतावताऽपि तस्याः संरम्भोऽपनीतः । शैलजा पुस्तकाधानीतः पत्रमादाय आमूलचूलं पपाठ । पत्रे प्रणयस्य सूचना बहुधा वर्ततां नाम, तथापि तत्पत्र विसदृशमवाभासत। किं मनुष्यः स्वस्य प्रणयिनीं प्रति एवं लिखितुं प्रभवति। एतत् यथा अन्यादृशं भाति । शैलजा पप्रच्छ--भगिनि, किं तव स्वामी उपन्यासान् लिखति ?

'स्वामि' शब्दं श्रुत्वा चकिताया इव कमलाया गात्रं संकुचितं समजायत । सोवाच 'नाहं जाने'

शैलजोवाच 'तर्हि किं त्वमद्य स्व प्रासादं गमिष्यसि ?

कमला शिरश्चालयन्ती ज्ञापयामास गमिष्यामीति। शैलजोवाच 'अहमपि अद्य सन्ध्यां यावत् त्वया साकं स्थातुं प्रभवेयम् परन्तु जानासि खलु—अद्य नरसिंहबाबोर्वधूरागमिष्यति । माता तु त्वया साकं गमिष्यति ।'

कमला सम्भ्रान्तोवाच--'नहि, नहि । माता गत्वा तत्र किं करिष्यति ? तत्र तु भृत्यो वर्त्तते ।

शैलजा स्मयमानोवाच 'अपि च तत्र वाहनमुमेश मास्ते । किं नाम ते भयम् ?'

उमा तदा काञ्चन शुष्कलेखनीं कुतोऽपि सम्पाद्य तया तत्र तत्र रेखा लिखति स्म उच्चैश्च किमप्यव्यक्तमुच्चारयति स्म, अमण्यत च पठं पठामीति । शैलजा तां तस्याः साहित्यरचनातो बलादाच्छिद्य अनयत् । सा यदा तारस्वरेण आपत्तिं प्राकाशयत् तदा कमला तामवोचत्--'आगच्छ, तुभ्यमेकं मनोहरमुपहारं ददामि ।"

एवमभिधाय तां गृहमानीय शय्यायां निवेश्य आदरातिशयस्द्व-लितां चकार । सा यदा प्रतिश्रुतमुपहारं दातुं निर्बन्धमकरोत्, तदा कमला पेटिकामुद्घाट्य, ततः स्वर्णस्य वलयद्वयं बहिश्चकार । इदं क्रीड़नकद्वयमुपलभ्य उमा परं प्रफुल्ला समजनि । मातृष्वसा यदा तदीयकरयोर्वलययुगं परिहितवती, तदा उमा तद्वलय भूषितं करद्वयं सप्रमोदमुत्तोल्य सगर्वं मातरं दर्शयितुं जगाम । माता स ससम्भ्रमं यथास्थाने समर्पयितुं तस्य करद्वयादपनयन्ती कमलामुवाच 'कमले, कीदृशी ते मतिः, एतादृशं वस्तु किमिति तस्याः करयोर्निदधासि ?'

एतेन दुर्व्यवहारेण उमाया आर्त्तनादाभियोगो गगनं भेत्तुमारभत । कमला तदन्तिकमुपेत्योवाच-"आर्ये, तदेतत् वलयद्वयमहं मयथत वथार्थंत उमायै प्रयच्छामि" शैलजा विस्मयाभिभूतोवाच 'किं त्वमुन्मत्ताऽसि ?"

कमलोवाच—"अये, यदि त्वं वलययुगं मह्यं प्रत्यर्पयेः, तर्हि मे मस्तकं भुञ्जीथाः, इदं विभज्य उमायां हारमेकं कलय ।"

शैलजोवाच—'नहि । सत्यं वदामि—न त्वादृशी निर्बोधा बाला मया दृष्टपूर्वा !'

एवमभिधाय कमलायाः कण्टं गाढमाशिश्लेष कमलोवाच—"अयें त्वदर्तिकादहमद्य प्रस्थिताऽस्मि अहमत्र अत्यन्तसुखेनासम् ।

एतावत्सुखं मम जीवने न कुत्राप्युपगतम् ।' एवं वदन्त्यास्तस्या अश्रुभिर्मिश्रधारा झरझरशब्देन पतितुमारभत ।

शैलजा समुद्गच्छदश्रु दमयन्त्युवाच—"कोऽयं । तेऽध्यवसायः, यथा कियदपि दूरं प्रयासि । अत्र यादृशेन सुखेनासीः, न तन्ममाविदितमास्ते । इदानीं तव सर्वविधा बाधा दूरं गता सुखमात्मनो गृहे एकाकिनी राजत्वं करिष्यसि । यदा कदाचित् यदि वयमापतामस्तदा भावयिष्यसि—आपदि अपगतायामुज्जीविता भवेयमिति ।

प्रस्थानकाले कमला यदा शैलजां प्राणमत्, तदा शैलजा अवोचत्—"श्वो मध्याह्ने तवान्तिकमागमिष्यासि ।"

कमला तदुत्तरे आत्मनः सम्मतिं वैमत्यं वा किमपि नोवाच ।

स्वप्रासादे उपस्थिता कमला उमेशं तत्रोपस्थितं ददर्श । कमलोवाच—कतं त्व मत्र ? किं यात्रां द्रष्टुं न गमिष्यसि ? उमेश उवाच—'त्वमद्यात्र एकाकिनी स्थास्यसि । कथ महम्—

कमला--साधु, साधु । नैतत्त्वया चिन्तनीयम् ! त्वं यात्रां द्रष्टुं गच्छ । अत्र वैष्णवो वर्तते । गच्छ, मा विलम्बं कुरु ।'

उमेशः–इदानीं यात्रायाः सुमहान् विलम्बः ।

कमला—भवतु नाम । विवाहोत्सवे वहव आडम्बराः । सम्यग् विलोक्य आगच्छ । गच्छ ।

एतद्विषये उमेशं सममिकमुत्साहयितुं न काऽपि आवश्यकता अवर्तत । तं प्रस्थानोद्यतं दृष्ट्वा कमला तमाहूय अवोचत्-"पश्य, यदा खुल्लतात आगच्छेत्, तदा त्वम्–

एवमभिधाय विषयः कथमुपसंहरणीय इति निश्चेतुं न शशाक । उमेशो दण्डायमानस्तस्या मुखं पश्यन्नवर्तत । कमला क्षणं विभाव्योवाच–'अनघारय खुल्लततस्त्वामत्यन्तं स्निह्यति । तव यदा यदावश्यकं भवेत्, तदा मम प्रणामनिवेदनपूर्वकं तं तदभ्यर्थयेः, स दास्यति तस्मै मम प्रणामान् निवेदयितुं न विस्मरेः । अवधृतम् ?"

साक्षान्निर्वापयन्तीं ज्वलदनलशिखा लोतकैरुत्स्रवद्भिः ।
एनां दृष्ट्वा विषण्णां विषभृतपरुषैर्दारुणैर्वाक्यजालै-
र्नो भूम्ना भाग्यदेवीमिह भुवि नरो गर्हयामास तीक्ष्णैः ॥
अद्राक्ष्यंश्चेदथैनां सकृदमरगणाः स्वामिनोऽङ्गानि तानि
कृन्तन्तं पीतकेशं प्रमुदितमसिना वीक्ष्य मुक्तार्तनादाम् ।
नो चेन्मर्त्यानुभावस्तरलयितुमलं स्वान्तमेषां, भवेयु-
र्नेत्राणि प्रज्वलन्ति ध्रुवममृतसितान्यन्तरं च द्रुतं स्यात् ॥

पलनिवासः—पश्य कथमसौ वर्णान्तरमापन्नः लोचनयोश्च लोतकानि धारयति । प्रार्थये नेतोऽधिकं प्रवर्तताम् ।

हेमलातः--साधु साधु । अवशिष्टो भागो न चिरावर्तयिष्यते । अये भद्र अधिकारिन्, अभिनेतारो यथा सुखं स्वच्छन्दं च स्थास्यन्ति, तथा विधेहि । अवधारय--यथा एते सुसभाजिता भवेयुः । एते किल प्रचलतः समयस्य इतिहासा निष्कर्षाश्च भवन्ति । जीवदवस्थायां तेषां मुखाद् दुर्नामार्जनापेक्षया मरणानन्तरं दुर्नामार्जनं श्रेयस्करं सम्पद्येत ।

पलनिवासः–देव, तेषां पदस्य योग्यताया अवस्थायाश्च अनुरूपां व्यवस्थां करिष्यामि ।

हेमलातः--देमस्य नाम्ना वदामि—यथा प्रकृत्या साधुरयं मनुष्यः । यदि वयं मनुष्यं तस्य गुणानुरूपं व्यवहरामः, तदा न कोऽपि दण्डादवहीयेत । स्वस्व मानस्य गौरवस्य च स्थितिं दृष्ट्वा तानेतान् ससम्मानं सगौरवं च व्यवहर । त्वत्सकाशात् ते न्यूनं मानं गौरवं चाहन्तु नाम, तेषां समधिकसम्माननेन समधिक गौरवदानेन च आत्मनः समधिका शालीनता प्रकटिता भवति । नय एतान् ।

पलनिवासः--एत एत महाभागाः !

हेमलातः– सखायः, एनमनुसरत । श्वः अपरं रूपकं द्रक्ष्यामः ।

(प्रथममभिनेतारं विहाय सर्वेऽभिनेतारः पलनिवासश्च निष्क्रामन्ति)

प्रत्न वयस्य,सकृत् अवधारय माम् । अपि नाम त्वं गोञ्जागस्य (१) वधमभिनेतुं शक्नोषि ?

प्रथमोऽभिनेता- देव, अथ किम् ?

हेमलातः–श्वो रात्रौ तमभिनयं ;द्रक्ष्यामि । आवश्यकतामनु द्वादश वा षोढश पङ्क्ती रचयित्वा तत्रान्तर्भावयितुमिच्छामि ताश्च त्वया अभ्यसनीयाः । अपि ताम अभ्यस्तुं प्रभवसि ?

प्रथमोऽभिनेता -देव, अथ किम् ?

हेमलातः--अतीव शोभनम् । भद्र, तमेनमधिकारिणमनुगच्छ । पश्य --नैष उपहसनीयः ! (प्रथमोऽभिनेता निष्क्रामति) सुहृत्तमौ, आरात्रि युवां यथेच्छं विहर्तुं विसृजामि । आपृच्छामि वाम् ।

रसाक्रन्दः--शुभमस्तु ।

हेमलातः--शुभमस्तु । (रसाक्रन्दो गूढास्तीर्णश्च निष्क्रामतः)

हेमलातः--अहमिदानीमेकाकी !

अये कथमहं धूर्तो नृशंसोऽस्मि सुदारुणः !
लोकातिगं किमेतन्नो ? यदसौ प्राकृतो नरः
कवेः कलाप्रभावेण स्वप्नक्रोधबलेन च ।
अभिनेये निजं भावं तथा गाढं न्यवेशयत्
येन तद्भावनावेशान्मुखं पाण्डुरतां गतम् ,
लोचने लोतकैः पूर्णे, दृष्टिश्चाविलतां गता !
स्वरो भग्नोऽवसादस्यच्छाया सर्वत्र दर्शिता !
हेकुवाभूमिकां गृह्णंस्तन्मयोऽभूत्समन्ततः ।
कः स्वार्थः सायितोऽनेन ? हेकुबा तस्य का मता ?
हेकुवायाश्च को वा स ? येनासावशुचत्तथा ॥
ममेव यदि तस्य स्यादुद्देश्यं शोककारणम्

(१) गोञ्जागः=Gonjago.

अकृत्रिमं, तदा किम्वा नैव साधयितुं क्षमः ?
लोतकैः प्लावमेदङ्गस्थलं कर्कश भाषणैः,
बधिरयेत्तथा कर्णान् प्रेक्षकाणामसंशयम्
उन्मत्तान् दोषिणः कुर्याद् भीतत्रस्तांस्तथाऽपरान् ;
ये हि दोषैर्न संसृष्टा निर्बाधाः प्रेक्षकाः स्थिताः।
विस्मिताः स्युर्न जानीयुर्मोहात् स्वं कर्णलोचनम् ॥
तथाप्यहं जडो मूढो मेधाकर्दमितोऽलसः ।
यथा स्वप्नसमाविष्टः स्वकर्तव्यपराङ्मुखः,
न किञ्चिदनुतिष्ठामि प्रियस्य नृपतेः कृते,
यस्य राज्ये तथा पत्न्यां सर्वस्वे प्रियजीविते
ध्वंसः संसाधितः क्रूरोऽसदृशो नीतिगर्हितः ॥
प्रकृत्या किमहं भीरुः ? न तथा, नापरस्ततः
को वा मां कथयेत्क्रूरं को वा भज्याच्च मे शिरः ?
को वा मे पाटयेन्नासां को वा ब्रूयाच्च नेदृशम् ?
"मिथ्यावादी न तुण्डेन हृदा चापि तथा खरः ।"
न कोऽपि प्रभवेद्वक्तुं सत्यमेतद् ब्रवीम्यहम्।
नाम्नेश्वरस्य साटोपं यतोऽहं सत्यमास्थितः ।।
परं यकृद्वहाम्येकं कपोत इव, नोदरम् ।
तत एव हि नो हिंसां न क्रोधं धारयाम्यहम् ॥
अभविष्यं तथा चेन्नोऽपूरयिष्यं नभःस्थलम्
कङ्कालरूपकैर्वायुपटैस्तस्य दुरात्मनः ।
कार्याकार्यानभिज्ञस्य धूर्तस्य परुषाकृतेः
नृशंसस्य दयाशून्यहृदयस्याधमस्य च ॥
प्रतिहिंसे ? वृणोमि त्वां प्रसन्ना भव शोभने !
किमेवं गर्दभो जातो ? धैर्यवानस्मि सर्वथा !!
योऽहं प्रियतमः पुत्रो घातितस्यायथा पितुः,
नरकेण च स्वर्गेण चोदितः प्रतिहिंसितुम्

केवलं बहुभिर्वाक्यैर्वाचाटेव नितम्बिनी
उत्सारयामि हृद्द्वारं, शपामि च मुहुर्मुहूः ।
योषेव रन्धनागारे व्यापृता पाककर्मणि ।।
धिगिदं लज्जितं कृत्यं धिग् दुर्बोधविचेष्टितम् ।।
प्रखरा भव मे मेधे ! व्यापृता भव सत्वरम्
श्रुतं दोषपरीता हि रङ्गालयमुपागताः ।
विलोक्य विद्रुतस्वान्तास्तथा येन समम्भ्रमम् ।
स्वीकुर्वन्त्यपराधं स्वं जवेनावेदयन्ति च ।।
हत्या निह्नुतरूपाऽपि साधारणतया भुवि
विवृणोत्यात्मनो रूपं जनानां पुरतोऽद्भुतम् ।।
साहाय्येनाभिनेतॄणामेषां पितृव्यसम्मुखे
वस्तूपस्थापयिष्यामि पितुर्हत्यानुरूपकम् ।।
सावधानो निरीक्षिष्ये दृष्टीरस्य च चेष्टितम् ।
यद्येषः विचलेन्नाम, स्वं कर्तव्यं चिनोम्यहम् ।
भूतोऽसौ यो मया दृष्टः पिशाचोऽस्तु तथापि सः ।
हृदयावर्जकं रूपं धर्तुं शक्तिं विभर्त्यसौ ।।
प्रायशः शक्तिमानेष मम दौर्बल्य शोकयोः
सुयोगं प्राप्य हत्यायां नियोजयति मां बलात् ।
येनाहं पतितो भ्रष्टः प्राप्नुयामधमां गतिम् ।।
तस्मात्सर्वात्मना जेयं मया तस्य चिकीर्षितम् ।
तदिदं नाटकं वस्तु, यस्य दर्शनतः सुखम्
शक्तो नरपतेर्ज्ञातुं भवेयं भावमान्तरम् ।।

( निष्क्रान्तः )

—०—

# तृतीयोऽङ्कः

## प्रथमं दृश्यम्

स्थानम्—राजप्रासादस्यैकमपवरकम् ।

(ततः प्रविशन्ति राजा, राज्ञी, पलनिवासः, अघालिका, रसाक्रन्दः, गूढास्तीर्णश्च)

राजा—किं पारितं परिज्ञातुं भद्रौ, शस्तेन कर्मणा
कुतोऽसौ विकृतिं धत्ते चेतसि स्वे तदा तदा ?
किमाशास्यसुखेष्वेषु विषयेषु निरुत्सुकः,
श्रयते परुषं भावं प्रमादात्ययिकात्तथा ।

रसाक्रन्दः—स्वयमङ्गीकरोत्येष आत्मानं विच्युतं पथः, ।
नाभिधत्ते परं हेतुं बहुऽधापि प्रचोदितः ।।

गूढास्तीर्णः-नूनं पश्येव सुन्नद्धं वक्तुमस्य मनोगतम
एष तिष्ठत्युदासीनश्चतुरोदात्त चेष्टया ॥
नोदयामो यदा वक्तुं बलादिव निदर्शनैः ॥

राज्ञी-किमग्रहीद्युवां स्नेहाद्-

रसाक्रन्दः- अत्यन्तं स्निग्धया दृशा ।
यथोदारो जनो मित्रं स्वागतेनाभिनन्दति ॥

गूढास्तीर्णः—गूहयित्वाऽऽत्मनो भावं बलादिव नियोजितः ।

रसाक्रन्दः—प्रश्नान् प्रष्टुमुदासीनः प्रगल्भश्चोत्तरार्पणे ।

राज्ञी—किमामन्त्रितवन्तौ तं युवां कस्मिन् विनोदने ?

रसाक्रन्दः--भद्रे, केऽप्यभिनेतारो मध्येमार्गं विलोकिताः ।
निवेदिताश्च ते तस्मै, स तृप्त इव लक्षितः
ते चाप्यत्रागमिष्यन्ति यथा सम्भावयाम्यहम्
आदेशश्चापि तैर्लब्धः किमपि प्रेक्षणीयकम्
अद्य रात्रौ पुरस्तस्य प्रदर्शयितु मुद्भटम् ॥

पलनिवासः—ध्रुवं सत्यं महाराज, सोऽभ्यर्थयत वामपि ।
निरीक्षितुं यथाकालं तदेतत्प्रेक्षणीयकम् ।।

राजा–सर्वात्मना तद्द्रक्ष्यामः परं तृप्तिकरं च नौ,
यदेष नाटकं द्रष्टुं कुतूहलमदर्शयत् ।।
विनियोजयतं भद्रौ, तमेतं तोषदयिषु
विनोदनेषु स्वां बुद्धिं यथा व्यापारयेत्परम् ।।

रसाक्रन्दो गूढास्तीणश्च–यथाऽऽज्ञापयते देवः

(उभो निष्क्रामतः)

राजा— कीर्तिदे, मुञ्च नौ रहः ।।
तथा व्यवस्थितं गूढं हेमलातो यथाऽऽपतेत् ।
अत्राकस्मादुदीक्षेतापालिकां सम्मुखागताम् ।
अहं तस्याः पिता गूढौ लक्षयेव तयोर्गतिम् ।
तयोः सम्भाषणादिभ्यस्तथा तस्य विचेष्टितात्
प्रभवेव विनिश्चेतुं किमेष प्रणयाधिना
विभ्रान्तो भजते दुःखमथवा कारणान्तरात् ।।

राज्ञी—पालयामि तवादेश, सक्रुयापालिके, शृणु ।
सुषमा महनीया ते हेमलातस्य विभ्रमे
महार्घं कारणं भूयात्तथा ते महिता गुणाः
मोचयित्वा तमाधिभ्यः क्रियासुः सुखितं ध्रुवम् ।

आपालिका—एवमस्तु महाभागे,

(राज्ञी निष्क्रान्ता)

पलनिवासः— त्वमत्रायाहि कन्यके,
देव, त्वमत्राप्यागच्छ तिष्ठेवालक्षितो बहिः ।
आपालिके, त्वमासीना दत्तदृष्टिश्च पुस्तके
वर्तस्व येन दृश्येथा स्तुवन्तीव रहःस्थिता ।।
प्रमाणितं परीक्षाभिर्यद्धर्मव्यपदेशतः,

पिशाचसदृशं घोरं पापं पुण्येन कर्मणा
छादयामो वयं लोके यथा शर्करयौषधम् ॥

राजा–(स्वगतम्)

सत्यमेतद् दृढं सत्यं, तदेतद्भाषितं मम
न जाने कीदृशं गाढं विवेकं परिकृन्तति ।
कदाकारः कपोलगण्डो वर्णकैः साधु चित्रितः
नाधिकं विकृतो भूयात्कश्मलान्मम कर्मणः ।
भूषितान्मञ्जुलैर्वाक्यैरहो भारो गुरुर्गतेः ।

पलनिवासः–शृणोम्यहं तमायान्तं, भवावोऽन्तरितौ प्रभो,

(राजा पलनिवासश्चान्तरितौ भवतः)

(हेमलातस्य प्रवेशः)

हेमलात–जीवेयं नोत जीवेयं प्रश्नोऽयं पुरतो मम ।
किं प्रशस्ततरं ह्येतत् ? सोढव्याः क्षुण्णचेतसा
किं सौभाग्यकृताः क्लेशाश्चापात्राश्च सुदारुणाः
उतोत्तोल्यानि शस्त्राणि विरोधे विपदम्बुधेः ?
प्रतिरुध्य शमं नेयास्ते च निरवशेषतः ।
मरणमभविष्यच्चेत्स्वप्नो, येन समा व्यथाः ।
सकलाश्च हृदाघाताः शान्ति समवाप्नुयुः ॥
अभविष्यत्तदाऽभीष्टं, मरणं शयनं परम्
यत्र स्वप्नाः समायान्ति, तदेतद्विपदाकुलम् ॥
न जानीमो वयं स्वप्नाः कीदृशाः सम्भवन्ति वा ।
अनुभूता मताऽस्माभिर्यातनां मर्त्यजीवने ।
चिन्तनीयं ततो ह्येतत्सा च चिन्ता करोति नः ।
अवसादाकुलान् नित्यं तादृशे दीर्घजीवने ।
को वा हि प्रभवेत्सोढुं वेत्राघातान् सुदारुणान् ।
तिरस्कारांश्च कालस्य दर्पान्धस्यावहेलनम् ।
निर्यातकस्य चाबाधा विक्षुब्धप्रणयस्य च ।

असंख्या वेदनास्तीव्रा न्यायस्य च विड़म्बनम् ।
दौरात्म्यमधिकारस्य यातनाश्च पृथग्विधाः
प्रयोजिता विना दोषं सहेत निरपत्रपः ?
यदैकेनासिना तेषां प्रतिकर्तुं स्वयं क्षमः ?
को वा भवन्नारो वोढुं शक्तो भारान् सुदुःसहान् ?
अवसन्नस्तथा क्लान्तोऽस्मिन्निर्यातितजीवने,
यदि न स्याद्भयं तस्य मरणात्समनन्तरम्
विपद्भ्यो, भाव्यमानाश्च याश्चास्माकं मतेन तु,
इतोऽधिकतरं घोरा, मनसोऽपि न गोचराः ॥
ततोऽस्माकं च सिद्धान्तो जायते निष्प्रभो यथा
पाण्डुरोगसमाक्रान्त उत्कण्ठाभिः पुरस्कृतः ॥
उच्चाकाङ्क्षाः समारम्भाः प्रबलाश्चानया सह
सम्भवन्ति विपर्यस्ता जायन्ते पङ्गवस्तथा ॥
निष्फलाः पर्यवस्यन्ति शान्तं भवतु साम्प्रतम् ॥
अये आपालिका सौम्या ! देवबाले, सकृत्स्मर
प्रसङ्गे प्रार्थनायास्ते ममाघानां प्रमार्जनम् ॥

आपालिका—अये मम प्रभुः सौम्यो बहोः कालदनन्तरम् ।
दृष्टस्तत्रभवान् भाग्यात् ! कथं वा वर्तसे प्रभो !

हेमलातः—प्रश्रितस्त्वाऽभिनन्दामि मङ्गलं !! मङ्गलं शुभम् !!

आपालिका—तव प्रेमावदानानि तिष्ठन्ति मम सन्निधौ
प्रत्यर्पयितुमिष्टानि, गृहाण देव, साम्प्रतम् ॥

हेमलातः—नो नो मया प्रदत्तानि, तानि तुभ्यं कदाचन ॥

आपालिका—नूनं जानाति वै देव, त्वया दत्तानि तानि मे ।
समं मनोहरैर्वाक्यैर्मधुरं परिकल्पितैः ।
तैश्च तानि महार्घाणि मयाऽऽदत्तानि सादरम्
नष्टं तेषां हि माधुर्यं प्रतिगृह्णीहि साम्प्रतम्
महार्घाण्यपि वस्तूनि वल्गूनि शिष्टमानसे

फल्गूनि प्रतिभासन्ते दाता निष्करुणो यदि।
तस्मात् त्व प्रतिगृह्णीहि--

हेमलातः— हा हा त्वं महिताऽसि किम् ?

आपालिका--यथाऽभिमन्यते देवः

हेमलातः— किं सौम्या चासि भामिनि !

आपालिका--किं वा कल्पयसे तेन नाहं बोद्धुं क्षमा, प्रभो !

हेमलातः--यदि त्वं महिता सौम्या महितात्वं तदा तव
सौन्दर्याद दूरतः स्थातुं नानुमन्येत कर्हिचित् ।!

अपालिका—किं सौन्दर्यं महितत्वापेक्षया इतरेण समीचीनतरं सम्पर्कं लब्धुं प्रभवति ?

हेमलातः—अये सत्यम् ! सौन्दर्यस्य प्रभावः शीघ्रतरं महितत्वं रूपान्तरं प्रापयति, महितत्वस्य तु प्रभावो न तथाशीघ्रं सौन्दर्यं रूपान्तरं गमयति। इयमेका समस्या पूर्वमवर्तत । इदानीन्तनेन कालेन तु तत्सत्यथिति प्रमाणीकृतम् । अहमेकदा त्वां कामयमान आसम् ।

आपालिका—अवितथमाह देवः। अहं तथैव प्रत्यायिताऽस्मि त्वया।

हेमलातः—नाहं तथा प्रत्येतव्यो भवामि, यतो गुणा न सर्वात्मना मानव प्रकृतिं दोहदीकुर्वन्ति, या किल पापानुवर्तिनी, तत्फलं चास्माभिरनुभवितव्यम्, न त्वामहं कामयामास।

आपालिका—ततोऽहं समधिकं प्रतारिताऽस्मि ।

हेमलातः—ततस्त्वं सन्यासाश्रमं प्रतिपद्यस्व। किमिति त्वं पापानां प्रसवित्री भवेः। अहं तु स्वयं साधारण उदारो भवामि । किन्तु एतादृशेषु विषयेषु आत्मानमपराधिनं कलयामि, यदिदं समुचित मभविष्यत् यदि माता मां नाजनयिष्यत् । अहं नितान्तं गर्वितः, प्रतिहिंसापरायणः, उच्चाभिलाषी, भवामि, बहूनि च पापकृत्यानि पृष्ठे वहामि, यान्यनुष्ठातुं न चिन्तयामि, स्वरूपतः प्रतिपादयितुं न कल्पयामि, निष्पा-

दयितुं च न समयमधिगच्छामि । स्वर्गमर्त्ययोरन्तराले चङ्क्रममाणामादृशाः किं वा कर्तुं प्रभवन्तु ? सर्वात्मना नृशंसा वयम् । न केऽप्यस्मान् विश्वसन्तु । प्रतिपद्यस्व आश्रमाभिमुखं पन्थानम् । अथेदानीं तव पिता क्व वर्तते ?

आपालिका--देव, स्वे गृहे ।

हेमलातः–सर्वाणि द्वाराणि रुद्धानि भवन्तु येन स्वगृहादन्यत्र विदूषकस्य भूमिकामभिनेतुं न प्रभवतु । आपृच्छेऽहं त्वाम् ।

आपालिका--अये स्वर्गवासिनो देवाः, सर्वथा रक्षत एतम् ।

हेमलातः–यदि त्वं परिणयसि–तर्हि तुभ्यमहं यौतुकमिदमुपहरामि भव नाम हिमवत्पतिव्रता, भव नाम हिमानीव विशुद्धा !! तथापि नास्ति निष्कृतिर्दुष्कृतेभ्यः । सन्यासस्याश्रममाश्रयस्व । स्वस्त्यस्तु । एष गच्छामि । अथवा यदि परिणेतुं व्यवस्यसि, तर्हि परिणयस्व एकं विमूढं, यतो विज्ञाः सम्यगेव जानन्ति--कथं यूयं पुरुषान् कीलकनियन्त्रितान् कुरुत । सन्यासस्याश्रमं गच्छ, त्वमपि सत्वरम् । स्वस्ति भूयात् ।

आपालिका--अये स्वर्गीयाः प्रभवः, प्रकृतिं प्रत्यावर्तयतैनम् ।

हेमलातः- युष्माकं प्रसाधनानि मया बहुधा आकर्णितानि । अलमलमधिकेन ? ईश्वरो वो मुखमेकमदात्, यूयं स्वयमपरं कल्पयत । यूयं कृतनृत्या इव पश्चात्संकुचित पदाः स्पन्दध्वम् । बाला इव क्रामत—ईश्वरसृष्टान् जन्तून् दुर्नामभिराह्वयत--सर्वत्र आत्मनो निर्बोधत्वमभिनीय नन्दथ । अपसर त्वम् । नाहमितः परमीदृशे कृत्ये आत्मानं निक्षिपामि । एतन्मामुन्मत्तं चकार । अहं ब्रवीमि--नावयोर्विवाहो भविता । याः किल परिणीतपूर्वाः सर्वास्ता एकाकारास्तथैव तिष्ठन्तु, याश्च न न परिणीताः, तास्तथैव तिष्ठन्तु, त्वमाश्रमं प्रतिपद्यस्व ।

(निष्क्रान्तः)

आपालिका--अये प्रज्ञा विपर्यस्ता तथोदारा समन्ततः

नष्टा पारिषदी दृष्टिर्भग्नः खड्गोऽस्त्रधारिणः ।
कवेः सुकल्पनाशक्तिर्बहुदूरं पराहता !
राज्यस्य सौरभं लीनं भग्नमालम्बनं महत् ।
मुकुरो वेषभूषाया विच्छायोऽद्भूत् समन्ततः ॥
स्वाकृतीनां प्रतिच्छन्दो विशीर्णो विगतच्छविः ।
निरीक्षको निरीक्ष्याणां मूकः सन्निम्नमाश्रितः ॥
धिग्धिग्धिग् धतभाग्यां मां नारीकुलविगर्हिताम् ।
मधुभ्यो मधुरास्तास्ताः संगीतवच्च सुश्रवाः
प्रणयोक्तीः समाकर्ण्य साम्प्रतं विक्लवा स्थिता !
यथा हि मूर्च्छना हृद्या संगीतस्य मनोरमा ।
रागाच्च्युता सुसंकीर्णा परुषा प्रतिभासते ॥
तथा वीरस्तथोदारः सज्जनानां शिरोमणिः,
अनन्यसदृशः सौम्यो यौवनस्य प्रतिच्छविः ।
उन्मादेन विपर्यस्तो वात्ययेव सुरद्रुमः ।
धिगस्तु हतभाग्यां मां दीनां, निर्घृणया यया
दृष्टस्य दृश्यमानस्य तस्य दृष्टं यदन्तरम् ॥

(ततः प्रविशतो राजा पलनिवासश्च)

राजा—प्रेमा नो चित्तविकृतेरस्य हेतुः कदाचन ।
नास्य चित्तप्रवृत्तिर्हि प्रेममार्गेण सर्पति ॥
न चास्य भाषणं किञ्चित् प्रेम्णा स्पृष्टमपि स्वतः,
सम्यग् विमृश्यमानं हि सोन्मादस्येव लक्ष्यते ॥
मानसे वर्तते किञ्चिदनुष्यूतं न संशयः ।
यत्रास्य निहितः शोको नीडे पक्षीव सीदति ।
यथा दृष्टं संशयेऽहं संरम्भः शोकसंकुलः ।
अनर्थाय प्रकल्पेत ततो द्राङ् निश्चिनोम्यहम् ।
अनर्थं प्रतिकाराय, करसंग्रहहेतवे
प्रेरये तमिलाखण्डं, तद्धु प्राप्यं हि वर्तते ।

इलाखण्डेश्वरो नादात् तस्मादगच्छतु सत्वरम् ।।
मध्येमार्ग बहून् देशान् नानाजातिजनैर्भृतान्
नगनद्यादिभीरम्यान, दृश्यानि विविधान्यपि,
दृष्ट्वा स्वाह्वदयान्नूनं दुःखमुत्सारयिष्यति ।।
कथं त्वं मन्यसे ?

पलनिवासः— देव, सम्यगेतद्विभावये ।
तथापि मम विश्वासः समुत्पन्नाऽस्य वेदना
नूनं निराकृतात्प्रेम्णः, कथमापालिके, त्वया
यदुक्तं हेमलातेन न वक्तव्यं श्रुतं हि तत् ।
यथा ते रोचते देव, तथा त्वं कर्तुमर्हसि ।।
परन्तु यदि रोचेत नाट्यस्य दर्शनात्परम् ।
तस्य माता महादेवी सकृत्तमुपसर्पतु
एकाकिनी, परिच्छेतुं तस्य दुःखस्य कारणम् ।।
अनुमन्येत चेद्देवस्तथा तौ मेलयाम्यहम्
अलक्षितो यथा ताभ्यामालापं शृणुयां तयोः ।
यद्येतया न शक्येत ज्ञातुं तद्दुःख कारणम्
तदा प्रेरयताद देवइलाखण्डमवा प्रभुः
यत्र कुत्रापि गोपायेदुचितं यद्धि मन्यते ।।

राजा—तथैवास्तु, समीचीनं नोन्मादो महतां पुनः ।
विज्ञैरुपेक्षणीयः स्यादपरीक्ष्य कदाचन ।।

(निष्क्रान्तः)

—०—

# द्वात्रिंशः सर्गः

दृष्टा काली घनाली श्रितवककवलया कालिकेवेशकान्ता
सख्या, (१) रक्षा कथं वा त्रमदकरिगतेः संविधेयेत्यभालि।
वाला दीना नवीनाऽनधिगतमिलना, प्रेयसा दुर्दिनेषु
जावन्ती क्षेममीयाद्यदि भवति विधिः सुप्रसन्नः कदाचित ।१।

कालः काम्यः समेषामपि तु विरहिणां व्यालतुल्यः करालो
भानोर्भानोर्विमुक्ता समभवदवनी सानुमन्तः कृशानोः
तापान्मुक्तास्तु कामं विरहिजनहृदि प्रज्वलत्येष तीव्रो
नो तोयेनास्तमेति प्रकटति जलदे चापि विद्युच्छलेन ।२।

हस्ते विन्यस्तगण्डा प्रवरदरभृता कण्ठलग्नासुरेषा
शीर्णा क्षोण्यां शयाना त्यजति घनघनान् श्वासवातानल्पान्
अङ्केन्यस्तान्यहस्ता वनभृतनयना दुर्वला क्षीर्णकाया
झञ्झावातेन सेयं प्रवलतररयैर्नोद्ध्वमुत्क्षिप्य नेया ।३।

श्रुत्वा नादं पिकस्य स्मरति घटसुतं (२) वज्रमाशङ्कमाना
का वा तं सोढुमीशा विषमशरशरैरर्दिता जीविता स्यात्।
कर्णावस्याः पिदध्वं सपदि निजकरैरर्दिते तोयदस्य
गेहे दध्वं पयोदो ग्रसति घरइति यावदस्याः पयोदो ।४।

---

(१) सख्या दृष्टा, सख्या चाभालीत्यन्वयः ।

(२) घटसुतम् = अगस्त्यम्।

अगस्त्यश्च पुलस्त्यश्च वैसम्पायन एव च।
सुमन्तुर्जैमिनिश्चैव पञ्चैते वज्रवारणाः ॥

शम्याका मूकयन्तः पिककुलमनिशं कामुकानर्दयन्ते
शब्दायन्ते समन्तात्तदपहृतिकृते पोषयामः शिवालीम (१)
भूत्या तोष्या शिवा सा शिवभवनकृते चूर्णमासादनीयं
नो गण्यं वित्तमूहं न च रचयत ते सर्वथोन्मूलनीयाः ।५।

पश्येदं केकिजातं कृतचटुनटनं दूरमुत्क्षिप्य बर्हान्
को वा लाभः खलानां विरहिजनवधे व्याधमाज्ञापय द्राक् ।
पाशैर्जालैश्च यष्ट्या प्रहरतु सकलान् व श आयातु शेषं
पिञ्छैस्तेषां विरच्य व्यजनचयमये भर्गमाराधयामः । ६ ।

नोदासीनालि भूयाः कुरु निजवशगं दासमाशु (२) प्रशास्तु
सोऽयं दात्यूहमेतं विरहहतहृदां कण्टकं कामिनीनाम् ।
उत्पातोऽस्यान्तमेतु प्रकटय न दयां सर्वथोत्पाटयस्व
वल्लीः पुष्पैरुपेता मधुप इह रुवंस्तापयेन्नो यथा ताम् ७।

मैवं मंस्थाः सखि त्वं व्रजति पुनरयं मानसं राजहंसो
जीवं जीवेशरिक्त प्रणयिजनगतं यौति जीवेशगेहम । (३)
पक्षांश्छिन्धस्तदेषां डयितुमपि कदा नैव शक्ता भवेयु-
र्यावन्नो नेत्रसम्पत्पतिमिलनमवाप्नोति रागाद्वयस्या ।८।

स्फोटः संजायतेऽस्याः कनकमयतनौ चन्दने क्षिप्तमात्रे
नूनं दह्यात्तनुं तां ज्वलनभवपदं ?४) तोयमोहामहे तत् ।
घृष्ट्वोशीरं गवाक्षानघऽरटितया रन्ध्रभागेषु लिप्त्वा
रुध्मो येन प्रवेशं कथमपि सलिलं नैव शकयेत कर्तुम् ।९।

---

(१) शिवालीम् = जम्बूकान् । पुष्टास्ते शम्याकान् भक्षयन्त उत्सादयेयुरित्यर्थः ।
(२) दासम् — कैवर्तम् । कैवर्ते दासधीवरौ" इत्यमरः ।
(३) जीवेशगेहम् = यमगृहम्
(४) ज्वलनभवपदम् = अग्नेरुपत्तिस्थानम् । "अग्नेरापः" इति श्रुतेः ।

दर्दूरोऽसौ दुरन्तोऽपहरति विरुवंश्चेतनां कामिनीनां
वज्रं कस्मादमुष्मिन्न पतति सहसाऽन्यत्र पातं करोति ।
भाग्यादेषां भुजङ्गा विलयपुगतास्ताक्ष्यंभुक्ताः प्रकामं
रावं रावं मृतः स्यात्क इह हरिसमः कुञ्जराभ्रं निहन्या ।१०।

कालः सोऽयं करालो विरहिजवकृते काल एवेति धत्तं
विद्युद्रूपां पताकां भवति गिरिधरो निन्दनीयो यदेनन्
नोत्सन्नं संदधेऽसौ तत इह करकाऽसारपातैर्निहन्ति
नीपैरोमाञ्चजातैः सुतनुवरतनुं कण्टकैश्च्छिनत्ति ।११।

धारा नीरस्य यद्वत्प्रसरतु सततं नेत्रतो नीरधारा
पृथ्वी पङ्काङ्कितेव प्रकटतु मलिना लोतकैर्गण्डपाली
स्तब्धा भूयाच्च वाणी परभृतरुतवदश्नुताद् ध्यानचिन्त
दुर्वारैर्मारबाणैः स्फुटतु च हृदयं मालतीपुष्पकल्पम् ।१२।

ज्ञानं चोत्सन्नमाप्ते घर इव कलुषा सप्तसप्तेरिभाभा
संकेतं सर्वतोऽयं प्रकटयति घनो धैर्यलावी कुठारः ।
व्यर्थाः सर्वेऽभ्युपाया असकृदुपचिता नाथमासादयन्ति
नद्या वृद्धिं गतायाः स्थगयति न रयं शासनं जातु राज्ञः १३।

को वा यायात्सकाशं झटिति वरतनोः प्रेयसो बोधयेत्तं
"बाला दत्तावधाना त्वयि मदनहता जावनं जीवनस्य
पत्ये यच्छन्त्यथास्ते त्वरितमत इथं वीर, सम्भावनीया
ह्युच्चे जीवे शुभं स्याद्वदन मितरथा द्रष्टुमस्याः क्षमःस्याः ।१४।

यावत्सख्यो बहिःष्ठा निजहृदि विविधांश्चिन्तयन्त्यभ्युपायां—
स्तावद्धाहारवोऽभूत्पुरवरकुहरे तूर्णमासेदुरेताम् ।
बाला चित्रार्पितेवाचलतनुनतिका शोचयामास सर्वाः
नासावंशेऽदधुस्तास्तुलशकलमथो प्राणसत्ताप्रतीत्यै ।१५।

कर्णावुत्क्षिप्य यत्नात्प्रमदकरिगतैः फुत्कृतैः पूरयन्त्यः
शीतोदैं रासिषिञ्चुः कमलकिशलयैर्वीजयामासुरार्द्रैः ।
भाले कर्पूरचूर्णं निदधुरपि शिवां सस्मरू रिष्टशान्त्यै
विप्रान् वासः सुवर्णप्रमुखवितरणैस्तोषयामासुराल्यः ।१७।

यावत्सख्यो निराशा 'न पुनरनुपमा लब्धबोधा कथंचि—
दस्मानाश्लिष्य कुर्याद्विशुच' इति सुरांश्चेतसा संस्मरन्ति
तावद्बाला विबुद्धा नयन सरसिजं किञ्चिदुन्मोचयन्ती
हस्तावुत्तोल्य यत्नाच्छिव शिव शिवदेति ब्रुवाणोदतिष्ठत् ।१८।

सख्यस्तां बोधयन्त्यो निजगदुरनघे, ब्रह्मचारी ब्रवीति
कान्तस्तेऽतीवकान्तस्तव मिलनरतो यानवाहैः समेतः ।।
निष्क्रान्तः स्वादगारात्त्वयि निहितमतिर्मंदा वृद्धिहेतो—
रध्यास्ते केरलं सोऽगतिरगतधृतिः फाल्गुने त्वामुपेयात्

तावत्प्राणाः सुरक्ष्याः सकलगुणवतामग्रणीः संगते ते
बध्नन्नाशां मुमूर्षुर्धरति तनुलतां वामकामेन दीर्णः ।
रागो वामप्रधृष्यः सम इह भुवने संगमो वां च हृद्यः
श्रूयाच्चेत्त्वद्वियोगं परिहरति पुरा जीवनं नूनमेषः ।२०।

वाणी, वीणां जयन्त्या मृदुमधुवचनैः प्राणरक्षां दधाना
शोकं तापं च तस्या मदन कदनजं श्रंसयामास किञ्चित् ।
कान्तास्येन्दोर्दिदृक्षा कवचमिव समावारयन्मारबाणान्
सख्यो दत्तावधाना अहनि निशि च तां वेष्टयन्त्यो ररक्षुः २१।

रेमे मेघस्य घोषं प्रियतमविजये घोषणं मन्यमाना
भूमौ शय्यां त्यजन्ती श्रितपवनपथा मार्गमालोकते स्म ।
वारं वारं दिदेश स्वसखिजनमये गच्छतालोकयध्वं
कच्चिद्राजेन्द्रसूनुर्मम हृदयहरोऽद्य प्रविष्टोऽत्र पुर्याम् ।२२।

मत्वा नेत्रं मृगाक्षी कमलकिशलयं प्रेयसश्चुम्वते स्म
कृत्वा मालां मृणालैः प्रियगुणनिकरान् सारसास्या जजाप ।
कान्तिं मत्वा सुवासो वपुषि परिदधे हासवुद्ध्या च चन्द्रं
तद्भावैर्भावितात्मा घन समयमनैषीत्कथंचित्सुजाता ।२३।

धात्रीभूषां थनान्ते सकलकलविधोद श नान्निह्नुवुस्ता--
हीनं शीतर्तुमेताः प्रवलभयभृता दृढगुर्जातशङ्काः ।
पद्मिन्येषा स्वभावात्सरसिजचरणा पद्महस्ताऽब्जनेत्रा
पद्मास्या पद्मगन्धा घरति धरयुगं पद्मकोषप्रकाशम् ।२४।

शीततौं पङ्कजातं भजति हि विलयं पद्मरूपा समन्तात्
सैषा रक्ष्या कथंस्यात् प्रवहति पवनः शीतशीतः प्रकामम् ।
कीरश्वासौ कपोतो नदत इह कलं दीर्घदीर्घा रजन्यः
केनोपायेन रक्ष्या कथमिति चकिताश्चिन्तयामासुराल्यः ।२५।

इत्युपेन्द्रण भञ्जेन प्रणीते रसकृत्तरे
श्रीलावण्यवतीख्याते महाकाव्ये मनोहरे ॥
वर्षर्तु वर्णनारम्यो यमकादिमनोरमः
द्वाविंशोऽयं गतः सर्गो रसिकानन्दवर्धनः ।-२६.२७।

इति श्री कविसम्राजा श्री उपेन्द्रभञ्जेन कृते
पण्डित कविराज श्री अनन्तत्रिपाठिशर्मणा प्रतिसंस्कृत
लावाण्यवती संज्ञके महाकाव्ये
द्वाविंशः सर्गः ।२२।



# त्रयोविंशः सर्गः

एकस्मिन्दिवसे श्रिते दिनमणौ मध्यं नभोमण्डलं
खिन्नो राजसुतो विहारसदने मित्रैः स्थितो वेष्टितः ।
सोष्णीषा सचिवात्मजेन सहितः प्राप्तः पुरोधःसुतो
राजाज्ञोपगतेक्षितुं शिवमहं सर्वानिति प्राब्रवीत् ।१।

"कामिन्यः शिशवो जरापरिणतास्तिष्ठेयुरस्मिन पुरे
सर्वे हस्तिपदातिसादिरथिनो यास्यन्ति ते रक्षकाः ।
सेनायाः परिचालने सचिवजोऽस्माकं सखा स्थापितो"
व्याहार; प्रमदोदधिं सरभसं चक्रे समुच्छ्वासितम् ।२।

उद्घोषो नगरे कृतः पुरजनाः श्रुत्वा श्रिता विभ्रमं
शस्त्रघं समसज्जयन सुनिशितं, कोषान्नवान् निर्ममुः ।
निस्त्रिंशांस्त्यतरुभिर्दृढान् विदधिरे हिङ्गूलरागाञ्चितैः ।३।

तूणीराणि नवानि चक्रुरजिनैः स्यूतैर्घृताभ्यञ्जितै–
रुष्णीषाणि तथा घनानि कवचान्युप्तानि कृष्णायसा ।
सम्भारांच्छकटैर्निजैरपि पुनर्भृत्या समासादितै –
र्वोढुं बद्धधियो वृषान् बलयतो वाहांस्तथाऽऽयो जयन् ।४।

स्वर्णैरौप्यवराटकैर्बहुविधैः पट्टैः पटैः कम्बलै—
र्मञ्जूषाः परिपूर्य वस्तुनिचयैः कांस्यादिभिर्भाजनैः ।
मातङ्गादिपुरस्कृता द्विजवरा फुल्लान्तरङ्गा भृशं
स्वां स्वां वृत्तिमनु प्रकल्प्य रुचिरान् वेषान् विनिश्चक्रमुः ।५।

भाण्डागारपतिः प्रफुल्लितमतिर्नगेन्द्र पृष्ठोपरि
मुद्रालीस्थगिका वह्वः कुथचये यत्नात्समस्थापयत् ।
सम्भारान् परिकल्पयत्सु वहुधा लोकेषु रागान्वितो
ऽस्तं यातो द्युमणिर्दिशश्च तमसा च्छन्ना वभूवुर्भृशम् । ६ ।

कामिन्यः कति वा न सन्ति भुवनेऽसङ्ख्याः पुनः कामुका-
स्ताञ्जेतुं न भवामि शक्त इति किं चित्ते निवेश्य स्मरः ।
पृथ्वीं कज्जलसदृशैर्जलचयैः कल्पान्त आप्लावयत्
स्वर्भानुः किमवा पलायनपरं भानुं ग्रसन् राजते ।७।

पार्श्वस्थावपि गुञ्जतो मधुकरौ द्रष्टुं न शक्तौ मिथः
संकेतोपगता परं हि चकिता वक्षो जघानावला ।
काका भीतियुजोऽसिता स्वपरा नीडं समाशिश्रियु-
र्द्वारासन्नदृशो धनागमधियस्तस्थुश्च वाराङ्गनाः ।८।

पश्चात्याञ्जनदिग्गजः सरति किं योद्धुं किलास्मानिति
सातङ्का मदशालिनो गजवरा भ्रान्ता दधावुर्द्रुतम् ।
कान्ताऽशोकतलं प्रियेण कथितं सङ्केतमाप्ताऽऽतुरा
नो दृष्ट्वा चकिता प्रियं निरदिशच्छोकान्मृषाभाषिणम् ।९।

कामार्तो विरहाकुलो विचलितः प्रस्थानभीत्याऽऽकुलो
धैर्यं धर्तुमपारयन् प्रियतमासङ्गोत्सुकः को युवा ।
दूतीं प्राह "समादरेण 'चतुरे, गत्वा प्रियां बोधय
श्वः प्रातः प्रतियामि तेन दयितां मत्सन्निधिं प्रापय" ।१०।

जारः कोऽपि लिलेख लेख 'मयि ते सङ्गोत्सुको निर्भरं
दीनः कामशरार्दितो लवमपि ध्याये युगं कातरः ।
तस्मान्मे दयिते, सकृत्कुरु कृपां प्रेक्षस्व नेत्राञ्चलै-
र्जीवं सार्थय संगतेन कुरु मा व्यर्थं च मे जीवनम् ।११।

जारोऽन्यो निजगाद स्नेहवशतस्तां माढराश्यात्मिका,
कन्या सिंहकटिश्च मीननयना त्व' मे तुलाकोमला
रम्या भ्रू लतया धनु:कुटिलया कुम्भस्तना प्रेयसी—
प्रेमाब्धौ मकरध्वजेन दलितो मग्नो मनः कर्कटः। १२।

दृष्ट्या मेषमथो करोषि च वृषं, त्वद्विप्रलम्भोल्मुलिः
गाढं पीड़यते यतो नमिथुनीभावः, प्रसादं कुरु।
वाण्येषा मुदितां चकार रसिकां सा हासरम्याधरा
वृक्षारूढरतेन चन्द्रवदना प्राणेशमाघ्रापयत् ।१३।

जारः कोऽप्युपभुज्य वामनयनां मित्रं बभाषे रहो
"स्निग्धां तां प्रणयोक्तितोऽङ्कवलनादज्ञासिषं कोमलाम्
संभोगाद्रतिपण्डितां करतलामर्शाद्विशालस्तनां
नाजानं तु सुवर्णमञ्जनमवेश्यस्याः सुवर्णं सखे" ।१४।

कोऽप्यूचे प्रियवल्लभां "विधिरसौ किं दारुणं सृष्टवान्
कः स्वप्ने समभावयत् प्रियतमा विच्छेद एवं भवेत्।
तारुण्ये, प्रतिमाससमार्तवदिनेष्वार्तिः पराभुज्यतं
प्राणा नूनमयेयुरत्र विरहे निस्सीमनि प्रेयसि" ।१५।

उत्सङ्गे विनिवेश्य कोऽपि रसिकः प्रीत्याऽऽबभाषेप्रिये
नो दास्यं नृपतेः कदापि महितं कान्ते सकृच्चिन्तय।
दासोऽहं तव पादपद्मयुगले प्रीत्या जितोऽस्मि त्वया
स्मर्तव्योऽस्मि कथान्तरेषु दयिते चेतोतिगंयाकृथाः" ।१६।

प्रेयस्याश्चिबुकं करेण कलयन् कान्तो बभाषे प्रियां,
"स्निग्धे, कामशरप्रहारजनिता भीतिर्ममोज्जृम्भते।
तत् त्राणाय तनुं दृढं कवचितां कर्तुं प्रिये कामये
तस्मात्पूतशरीर सङ्गमहितां शाटीं प्रयच्छानघाम् ।१७।

दीपेनोद्दीपिते विलासभवने कान्तां निधायाग्रतो
यावच्चित्रयते निजां प्रतिकृतिं प्रातः सदा लोकितुम् ।
तावत्सा मृदुना स्वरेण दयितं प्रोवाच बद्धाञ्जलि:
किं सीता न गता प्रियेण किमिति त्वं मां न नेतुं क्षमः ?

प्रस्थाने कृतसाहसा प्रियतमा नूत्ना निजं वल्लभ—
मुत्तानं विनिपात्य जातरभसा रन्तुं प्रवृत्ता स्वयम् ।
कान्तः केलिगृहे वितानमणिभिर्दीप्ते तदाचेष्टितं
दृष्ट्वाऽभावयत प्रिया चिरचितं सर्वस्वमाधादिति ।१६।

रत्याऽपूर्वसुखं यिभुज्य मनसाऽकार्ष्टीमिदं दम्पती
श्वः प्रोतर्भविता रिपुर्हरपरो, मा भूत्प्रभाता निशा ।
धाता ब्रह्मनिशां करोतु तदिमां नूनं स ना नाथवा
नारी स्याद्य इहासृजत्प्रणयिनो विच्छेदजां यातनाम् ।२०।

प्रेयान् कोऽप्यवरोप्य जातिलतिकां स्वीये गृहप्राङ्गणे
स्वोत्सङ्गे विनिवेश्य प्राणप्रतिमामूचेऽथ तस्याः सखीम् ।
स्वाधीनो न भवामि तेन दयिते, गच्छामि देशान्तरं
पाल्येयं सततं विलोकय तदिमां विच्छेददुःखं हरेः ।२१।

बालाऽप्राप्तसमागमा प्रियतमं यात्रोन्मुखं कातरा
सम्भोगैर्विविधैरतैश्च ललितैर्वन्धैस्तथाऽतोषयत् ।
प्रागल्भ्यं परिलक्ष्य शङ्कितधियं विज्ञाऽऽकलय्याञ्चले
वृक्षे कण्टकिते विलिख्य शिखिनं चक्रे प्रफुल्लान्तरम् ।२२।

प्रेयान् कोऽपि युवाऽवददगतधृतिः कान्तां मनोहारिणीं
चित्रं भाति कथं वियुक्त पुरुषाः स्यास्यन्ति जीवं विना ।
गात्रं निष्पुलकं भविष्यति तथा लक्ष्म्याश्च्युतं निष्प्रभं
बालोवाच सगद्गदं खलयिधिर्नो वेद्मि किं धास्यति ।२३।

बाला काचन केतकीदलतले कान्तं लिलेखातुरा
त्वं जीवेश इति प्रयुक्तमसकृत्तत्सार्थकं साम्प्रतम् ।
प्रास्ते ते कवचं घनं परिहितं भीतिर्न कामेषुत—
स्त्वं मे वर्म गते त्वयि स्मरशरैर्नूनं हता स्यां द्रुतम् ।२४।

का चित्रप्रतिमेव निश्चलतनुर्बभ्रेऽश्रुभिर्लोचने
'किं कुर्या'मिति काऽपि कामुकगलं धृत्वा भृशं कम्पिता ।
काऽवोचन्ननु याहि देशमपरं सार्द्धं मया काङ्क्षितं
राजा स्यात् कुपितोऽस्त्वयि यदि पुनर्नो यास्यसि सम्प्रति

एकोवाच सखीं सदा स्मरहरं संपूजयामि स्वयं
पत्युर्निर्गमनात्पुरो मम यथा प्राणा भवेयुर्गताः ।
नो दुःखं भविता, ततोऽप्यपरयाऽभालि प्रियस्योरसि
विश्लिष्टे मम वक्षसो न हि लभे निद्रां कथं स्यां गते ? ।२६।

का कान्तं शपथेन रोधितवती—'दृश्यं न कान्तान्तरं
स्वं रूपं मनसि स्थितं सुचतुरा द्रष्टुं सदाऽनाययत् ।
कण्ठे काऽपि निजं रसान्निदधती हारं गले प्रेयस—
ऊचे "ह्यस्य विलोकने स्मृतिपथे नूनं भवेयं तव"

बालैका विरहानलादिव तनुः पद्मस्य पत्रं हृदि
विन्यस्येदमुपाजहार निभृतं शुष्कं प्रियायादरात् ।
वीना रत्नमुपागतं सुविशदं हित्वा यथा सीदति
मूढाऽऽसीद् विगते प्रिये वरतनुर्भाग्यं निनिन्दाधिकम् ।२७।

बालैका पति पादसेवनपरं स्वं रूपमालोख्यगं
कृत्वाऽधो विलिलेख सन्ततमहं दृश्या त्वया दूरगा ।
तच्चित्रं रुचिरेण पट्टवसनेनाच्छाद्य रागान्विता
न्यस्यन्ती पतिपेटिकान्तरनघा मोहं ससर्जाधिकम् ।२८।

बाला काऽपि पतिं प्रबोधितवती कार्मान्' चिन्ता मयि
काले स्वीकुरु भोजनं, त्वयि सुखे नो दुर्लभा मादृशः ।
अन्या काऽपि दिदेश कान्तमबला सख्या "परावर्तितो
यां नारीं परिणेष्यसे नहि पुनस्तस्यां भवेर्निष्ठुरः ।" ।३०।

प्रोवाचोपपतिं परं प्रमुदिता पत्यौ प्रयाणोन्मुखे-
ऽपेक्षस्वैकमहश्चिराभिलषितं सौख्यं गृहाणार्पय ।
मुग्धा भीतिमुपागता त्ववचना श्वश्र्वा ननान्दुस्तथा
नेत्रेणारुणकान्तिनैव दयितं यात्रानिवृत्तं व्यधात् ।३१।

आली काऽपि जगाद यानविरतं किं यासि मर्गेक्षया
शम्भुद्वन्द्वमिदं दधाति सुभगा सौम्यं मदीया सखी ॥"
इत्येवं तरुणैस्तथा युवतिभिः प्रस्थानभीत्या भृशं
ये भावाः प्रकटीकृता न हि समे वर्ण्या भवेयुः कदा ।३२।

निर्याता रजनी, श्रुतो दररवो जारा गता विभ्रमं
दम्पत्योश्च कुठारकोक्कुटरवैः सौख्यद्रुमः पातितः ।
प्राची चारुणभां समाश्रितवती, पुर्यां कृता घोषणा-
"सज्जाऽस्तु त्वरितं गजाश्वतुरगा सेना तथा पादगा" ।३३।

तूर्यासीद्रटिता बलं पशुपतिद्वारे प्रविष्टं जवात्
कालं ज्यौतिषिकः शुभं निरदिशद्राज्ञः सुतस्यानुगम् ।
रम्भावृक्षततिर्घटाश्च सुभृताः संस्थापिताः सम्मुखे
वेश्या मङ्गलगीतिका जगुरयो रम्भासमा भूषिताः ।३४।

भृत्याश्चित्रमदर्शयन् हि पुरतो रमाभिषेकाङ्कितं
ध्वानेनाननडिण्डिमस्य सुभगा द्यावं व्यधुः कम्पिताम् ।
चक्रे शास्त्रविधानतः शुभकरं कार्यं पुरोधःसुतो
बालारूपमथो निधाय हृदये राज्ञः सुतो निर्ययौ ।३५।

पत्रं मृद्वधरो जलाढ्यकलशौ तस्या उरोजौ शुभौ
मीनौ द्वे नयने गलं दरवरं माङ्गल्यगीतिर्वचः।
हंसाली गमनं विशालजघनं भद्रासनं चाग्पुरो:—
रम्भावद्धसितं दरं स्तनमुखं रम्यं गुवाकं शुभम्।३६।

एवं भद्रमयीं नृपस्य तनुजां स्मृत्वाऽऽरुरोह द्विपं
क्षत्राः शूद्रविशः प्रणेमुरखिलाः कल्याणमूचुर्द्विजाः
सेनाऽग्रे चलिता प्रकम्पितवती पृथ्वी, भरेणानतः
शेषो, धूलिचयेन छन्नमभवद्व्योमार्क आसीद्वृतः।३७।

चक्राङ्का नलिनं विलोक्य मलिनं रात्रिं बिभाव्याकुला
नृत्यन्तिस्म मदेन केकिनिचया नीडान्यगुर्वायसाः।
निर्याता अभिसारणे च कुलटा, दीपावली बालिकाः
सोल्लासाः कुलपालिका गृहमुखे प्रज्वालयांचक्रिरे :३८।

वाद्यानां निनदैः स्वनैश्च धनुषां दन्तयुज्भितैर्बृंहितैः
खड्गानां झनकैस्तथा प्रचलतां ह्रेषारवैर्वाजिनाम्।
सम्पूर्णा हरितः प्रकाममनदन दिगदन्तिनः कातराः
क्ष्वेडः किं कुलिशाहृतिः सुरपतेर्मैनाक माविध्यतः ३९।

भूपालाः समपूजयन् नृपसुतं मार्गे प्रजाभिः सह
कासाराः सरितश्च पानरभसैः सेनाभिरुच्छोषिताः।
गृध्रास्तृप्तिमुपागता सहशिवा मांसाशिनो यादसां
किष्किन्ध्यां विविशुः पुरीं बहुदिनैः सेनास्तदीया मुदा ४०।

तस्मिन् वने वासवकाननोपमे
विश्रम्य हृष्टाश्चतुरङ्गसैनिकाः।
श्रमं विनीयापगताध्वतापाः
सुखेन सुप्ता रजनीं व्यतीयुः।४१।

## १ । संस्कृते शिक्षाप्रियस्य (Shakespeare) नाटकानि—

पाश्चात्यनाट्यकारेषु प्रथमं स्थानमधिकुर्वतः शिक्षाप्रियस्य सुखान्तनाटकेषु अधस्तनानि चत्वारि रूपकाणि एतावदवधि प्रकाशितानि। इदानीं दुःखान्तं नाटकं हेमलातः ( Hamlet ) यन्त्रस्थम्। अनुवादकेन श्रीमता अनन्तत्रिपाठिशर्मणा मौलिकता यथायथं संरक्षिता। भाषा सरला प्राञ्जला च। सरसानीमानि नाटकानि सहृदयानामावर्जनाय प्रभवन्ति। पाश्चात्यकवेर्वर्णनाचातुरी, चरित्रचित्रणपरिपाटी जंच नियतमास्वादनीया भवति। प्रत्येकं रूपकस्य मूल्यं सार्द्धरूप्यकत्रयम्।

१। द्वादशी रात्रिः ( Twelfth Night )
२। बह्वारम्भो लघुः क्रिया ( Much Ado About Nothing)
३। वेणीश सार्थवाहः ( Merchant of Venice )
४। यथा ते रोचते ( As You Like It )

## २ । मनोरमायाः प्राचीनाः सञ्चिकाः

प्रतिवर्षं मनोरमाया द्वादशापि संचिका एकत्र संग्रथ्य प्रकाशिताः। विविधाः सरसाश्चित्तहारिण उपादेयाः प्रबन्धाः, शिक्षाप्रियस्य नाटकानि, श्रीरवीन्द्रनाथठक्कुरस्य उपन्यासाः, उच्चवचा विमर्शाः, सरसानि काव्यानि कथाश्च प्रकाशितानि। प्रत्येकं वार्षिक सञ्चिकाया मूल्यं रूप्यकषट्कमेव।

## ३ । नीलाद्रिनाथ शतकम्

अतीवमनोहारि यमकभूयिष्ठं श्रीजगन्नाथस्तुतिपरं खण्डकाव्यं श्रीपुरुषोत्तममिश्रेण सर्वतन्त्रस्वतन्त्रेण प्रणीतम्। श्री अनन्तत्रिपाठिशर्मणा कृतया टिप्पण्या समुद्भासितम्। मूल्यमेकं रूप्यकम्।

## ४ । संस्कृतीया प्रशासनशब्दावली

शासनक्षेत्रे व्यवह्रियमाणानां परिभाषिकशब्दानां संस्कृतपर्यायः। अतीवोपरया। मूल्यं सार्द्धरूप्यकत्रयम्।

प्राप्तिस्थानम्—शिरोमणि मुद्राशाला
ब्रह्मपुरम् २ ( ओड़िशा)